यत्ते भूप! मनीषितं भवति तत्तूर्णं कृपाद्वीपव-
त्येषा दास्यति भारती जहि जपं प्रीतोऽहमस्म्यागतः ।
इत्थं श्रोत्रगतां विधातृगदितां वाणीं सुधाधोरणीं
कृत्वा श्रोत्ररसायनं स गगनस्थं तं ददर्शाग्रतः ॥ ११२

गद्यम्—तदनन्तरमसावधीश्वरो मद्रजनपदानां, अचिन्तितागमनं अकाण्डाविर्भूतमिव घनममृतासारवर्षिणं, अम्भोजबान्धवमिवापरमम्बरविद्योतमानं, अम्भोजभवनमापन्नजनपरायणं, उद्वीक्ष्याक्षिभ्यामुत्क्षिप्ताभ्यां, मङ्क्षूत्थायाब्जाक्ष्या सह प्रणिपत्यारचय्याञ्जलिकुड्मलमुत्तमाङ्गे अतीव कृतार्थोस्म्यहमनुगृहीतोस्मि, कृतं मदीयं जन्माधिगतसाफल्यं, जाता मदीयतपस्सिद्धिः, उद्भिन्नो मामकजन्मान्तरसुकृताङ्कुरः, तारिताश्चास्मत्पितरः, सञ्जातमिह यदीदृशं भगवता सह भारत्या भवदीयदिव्यसंदर्शनमित्युच्चैर्विज्ञापयन् मुहुर्मुहुरमन्दानन्दामृतपूरनिमग्न इव स्थित्वा मुहूर्तमनुध्याय सनिदर्शैस्सेतिहासैश्च वचोभिरित्थमस्तावीत् ॥ ११३

माता लक्ष्मीः पिता ते मुररिपुरमरास्सेवकास्साधुचर्या
भार्येष्टा भारतीयं तव महितसुता नारदाद्या मुनीशाः ।
वाचस्ते वेदरूपास्सकलनुतिपदं सर्वलोकाधिपत्यं
सुस्थानं सत्यलोकस्तव विभवमतः कोऽत्र वक्तुं समर्थः ॥ ११४

तथाऽप्यहं तावकपादपद्म-
चिन्ताविशेषादिह वक्तुकामः ।

जातः प्रसन्नो भव सर्वलोक
स्वामिन्मयि त्वामनुसंदधाने ॥ ११५

आबाल्याद्भवदीयपादनलिनध्यानस्थितोऽप्यात्मवि-
त्स्तोमस्ते पददर्शनाय सुचिरान्नालं बभूव स्वयम् ।
यच्छीघ्रं भवतोरिहाभिगमनं भव्यात्मनोर्भद्रदं
भक्तानाममितं तपःफलमिदं मत्पूर्वधात्रीभृताम् ॥ ११६

पयोधौ पद्मेशः फणिपतिफणाधः प्रमदया
शयानोऽगान्निद्रां पशुपतिरभूत्पर्वतगृहे ।
जगन्त्येतानि त्वं यदि कमलभूर्नावसि भवेत्
कथं लोकेशत्वं तव गतिरमीषामपि कुतः ॥ ११७

वाणीं पाणिपयोरुहाद्दरणद्वीणां मनोहारिणीं
एणीदृक्समलोचनां फणिलसद्वेणीं शुभोद्गारिणीम् ।
दैवैकामपि तां चतुर्मुख! महासौधेषु मोदात्सदा
नृत्यन्तीं वितनोषि यत्कुत इदं चातुर्यमभ्यस्यते ॥ ११८

पुरा नाभीकोशात्सरसिजमयात्कैटभरिपोः
बहिः प्रत्यागच्छन् जलमयमिमं लोकमखिलम् ।
प्रपश्यन् जन्तूनां स्थितिमरचयद्यत्करुणया
यथापूर्वं तस्मात्कमलज! विधाता खलु भवान् ॥ ११९

त्रिमूर्तीनां मध्ये प्रथमगणनीयोऽसि भगवन्!
यतस्सृष्टेः कर्ता प्रथमतरकार्यस्य जगताम् ।

ततः ख्यातिर्लोके विधिहरिशिवा इत्यविहता
प्रभूता त्वन्मूला भवति विदुषामप्यभिमता ॥ १२०

देव्याऽऽलापनमेककेन मुनिभिस्संभाषणं चापरे-
णान्येनाननपङ्कजेन जगतीसृष्टिक्रमाणां कथाः ।
अन्येनाखिलवेदपाठमसकृत्कुर्वाणमत्यादरात्
तच्चातुर्यवशाच्चतुर्मुख इति त्वां मन्वते योगिनः ॥ १२१

जनयति भवांस्त्रिलोकीं रक्षति लक्ष्मीपतिः कटाक्षेण ।
क्षिणयति भूतनाथस्त्वत्तस्तस्मादपत्यमाशासे ॥ १२२

गद्यम्—इत्यब्जभवमभिस्तुत्याश्वमहीश्वरः स्वाभिमतार्थं चाभिधाय तत्सहधर्मचारिणीं आश्रितजनगणरक्षणकरणधुरीणचरणां वाणीमस्तावीच्च ॥ १२३

करक्वणितकङ्कणध्वनिविशेषसम्मिश्रितं
निजाङ्गुळिदळाञ्चलैर्मणिविपञ्चिकावादिनीम् ।
श्रुतिस्वररसोज्ज्वलां श्रवणयोस्सुधासेचिनीं
समस्तबुधसेवितां मनसि भावये देवताम् ॥ १२४

दरहासचन्द्रिकारुचिधवळीकृतदिव्यतनुसौधाम् ।
शरदभ्रसदृशवसनां शुभ्रां वैधात्रसुन्दरीं कलये ॥ १२५

मन्दारमुकुलमालासन्देहावालहारवलयाढ्याम् ।
हारगिरिहीरताराकारां सारां सरस्वतीं कलये॥ १२६

इत्थं स्तुवन्तं बहुधा नमन्तं
स्वस्मिन् दृगन्तं मुहुरर्पयन्तम् ।
कारुण्यपूर्णः कमलासनस्तं
सस्नेहमालोक्य समाजगाद ॥ १२७

पुत्रस्ते न भवेन्महीपमघवन्! किं त्वद्य पुत्री भवेत्
पुण्यश्रीरिव साकृतिस्सुचरिता त्वत्पूर्वधात्रीभृताम् ।
वाग्देवीकृपयोदितां रचय तां नाम्ना युतां त्वत्सुतां
सावित्रीति भवान्भविष्यति यमात्पुत्री तदाराधितात् ॥ १२८

विश्रुतकीर्तिर्विबुधश्लाघितमूर्तिर्विधूतविनतार्तिः ।
स्थास्यति रुचिरस्फूर्तिस्सा सुचिरं प्राप्तभव्यगुणपूर्तिः ॥ १२९

गद्यम्—तया च विनयविवेकादिगुणगणाभिरामया, निजाभिरूप्याभिनिर्जितनिर्जरेश्वररामया, आर्यादरणीयातिलोभनीयकीर्तिसोमया, सकललोकलोचनोत्सवारामसीमया, अनन्यसाधारणात्मचारित्रतुलितरमायामस्यां भवदीयमहिष्यामाविर्भूतया अभूतपूर्वाश्रुतचरचरितया सुतया भगवत्या जनककुलमिव भर्तृकुलमप्यातिपवित्रीकरिष्यत इत्याज्ञाप्यान्तर्दधे भगवान् भारत्या सहाम्भोजयोनिः ॥ १३०

गद्यम्—अन्तर्हिते चाखिलभुवननिर्माणचातुरीधुरीणे, दुरन्ताश्रितगणरक्षणपारीणे द्रुहिणे, क्षोणीपतिरपि वाणीप्रणि-

शवदनाम्बुजक्षरदक्षीणमकरन्दमसृणवाणीसुधाधोरणीपानपरि -
पूर्णान्तःकरणषट्चरणः हैरण्यगर्भविरहासाहिष्णुतया मन्देतर-
व्यसनाम्बुधिमग्न इव स्थित्वा मुहूर्तमालोच्य गत्वा चाश्रमा-
भ्यन्तरं, अम्भोजसम्भवामिवापरमनुभावादवभासमानं, अम्भो-
जबान्धवमिव विराजमानमभिप्रणम्य माण्डव्यनामानमात्मस-
न्तानानिदानमन्त्रायतनं, अनुकम्पितस्तेनसाकं सहचरन्त्या स्व-
नगरमाभिगन्तुमाभिलषन् इत्थं विज्ञापयामास ॥ १३१

भवतोऽनुग्रहवशतो भक्तावनभवनमब्जभवनमहम् ।
परिसेव्यास्म्यपदुरितः किं कर्तव्यं मयाऽद्य वद भगवन्! ॥
विज्ञापयन्तमेवं नृपवज्रिणमाह विश्वऋषिवज्री ।
कमलोदवासितकरुणाकलितेक्षणकलनधूतकलुषघनम् ॥ १३३
कतिपयादिवसान मामकासिद्धाश्रमसन्निकाशवासिऋषीन् ।
परिसेव्य तदादेशान् प्राप्य स्वपुरीं ततः प्रयाहीश ! ॥ १३४

गद्यम्—इति वदति मुनिवरे महामहिमवति स भूपति-
स्तथैवाकरोत् ॥ १३५

आज्ञापितः पुनरपि स्वमनोरथार्थ-
संप्रत्ययपञ्चनिधिना स बभूव तेन ।
सम्प्रस्थितस्सह यथाऽऽगतमम्बुजाक्ष्या
सर्वान् प्रणम्य च ऋषीननुमोदितस्तैः ॥ १३६

आजगाम सहसाऽथ भूपतिः
भार्यया सह तयाऽब्जवक्त्रया ।

आश्रमाद्बहिरुपेत्य नागरीं
संप्रपद्य पदवीं समाययौ ॥ १३७

मृद्वीं शिरीषकुसुमादपि मञ्जुळाङ्गीं
नागाङ्गनामिव मुहुस्साविधे श्वसन्तीम् ।
देवीं विलोक्य दययाऽधिकयाऽधिपस्तां
ऊचेऽम्बुजातविततेन विलोचनेन ॥ १३८

कान्ते श्रान्ताऽस्यनशनवशादातपोऽयं प्रवृद्धः
कायस्तेऽसौ किसलयनिभो म्लानतां संप्रयाति ।
पादावेतौ पयसिजसमौ काननं कण्टकाढ्यं ।
तस्माद्भूमौ चरणयुगळीं मन्दमन्दं निधेहि ॥ १३९

इत्थं तैस्तैर्मधुरमधुरैर्मोहयन् मोहनाङ्गीं
नर्मोद्भूतैर्नवमधुनिभैर्भावगर्भैर्वचोभिः ।
गच्छन् राजा कुचभरनमन्मध्यया राजपुत्त्र्या
तत्रापश्यत्स्वभुजयुगळीरक्षितान् भूमिभागान् ॥ १४०

गद्यम्—एवमागच्छन्तौ, इतरेतरमनोहरालापाधिगताध्वखेदशैथिल्यौ अखण्डराजमण्डलराजन्मुखपुण्डरीकौ, अरुन्धतीवसिष्ठाविव तनुजन्मशक्तियुक्तौ, अपर्णान्धकारी इव सौकुमार्यसम्पन्नौ, रोहिणीशशधराविव अनवरताविरचितबुधानुमोदौ, शचीपुरन्दराविव सुमनोरञ्जनसुगुणालङ्कारौ, स्वाहावीतिहोत्राविव सत्रविधिनियुक्ताभिमतार्थसङ्ग्रहसमेधितामोदौ, राजदम्प-

ती, कियद्दूरमागतमावाभ्यामधिवसाति कं देशमस्मदीयनगरी, किं वा विस्मृतः पन्थाः पूर्वयात्राभ्यस्तः पितामहप्रसूक्षप्रभव प्रमोदभरात्, नहिनहि गिरिश्चित्रालय इति पुरः पौरकृत-नामा जागर्ति लोचनगोचरोऽयं महान्, तत्परिसरे खलु विराजति पुरी हेमवती इत्यन्योन्यं विचारयन्तावातितरमगमता-मात्मीयनगरोपवनमनुपमानसौभाग्यापहासितामरोपवनम् ॥ १४१

तत्र—

रमामाधवौ वा रतिश्रीसुतौ वा
भवानीभवौ वा सरस्वत्यजौ वा ।
जगद्रक्षणार्थं चरन्तावितीमौ
ननन्दुः प्रजा वीक्ष्य जायापती तौ ॥ १४२

कुवलयबान्धवाख्यमधुरस्स महीशवरः
सुललितचन्द्रिकातिरुचिराख्यवधूरपि सा ।
क इह जनो न याति परमाद्भुतरूपभृतोः
मुदमवलोकनेन नितरामितयोस्स्तुतयोः ॥ १४३

गद्यम्—तदनु महीमण्डलमण्डनायमानावनीपपुण्डरीको-श्चावनीनायकः उपवनपालकमात्मरूपोपहासितराजीवसायकं, अतिकोमलपल्लवारुणपरिधानपरिलसत्प्रतीकं, अनन्यसुलभात्मा-नुगुणपटवासपरागपरिमळवासितहरिदम्बरं, आत्मावलोकनभ-यसम्भ्रमेणोपेत्यारचितप्रणामं आरात्किञ्चिदाकुञ्चितमस्तकं कं-चन मधुकरनामानमवलोक्य साविश्वासमयेमधुकर! त्वमद्य

प्रतिगतो नगरीं सचिवगरिष्ठं प्रद्युम्नशेखरनामानममात्यमाक-
लय्य सज्जीकृतरथेन तेन सह त्वरितं त्वया समागन्तव्यं,
इति तदन्तिकं तं प्राहिणोत् ॥ १४४

गद्यम्—सोऽयमपि संप्रणम्य तं तथेत्यूरीकृत्य तदाज्ञां
अतिजवेनागत्य, सुधर्माधिष्टितं अनेकराजपुरुषावष्टब्धप्रान्तंआत्म
धिषणाधरितधिषणं. अमात्यकेसारिणं नमवलोक्य नत्वेत्थं
विज्ञापयामास ॥ १४५

गद्यम्—देव! मन्मुखेनोद्यानवनगतस्तत्रभवान् देव्याऽ
नुगतः पृथिवीदयितस्त्वामनामयं पृच्छत्याज्ञापयति चात्मनस्स-
न्निकाशमायुष्मता भवता समानेतव्यस्सज्जीकृतस्यन्दन इति ॥

गद्यम्—अथ तद्वचनसुधारसमतिसरसास्सर्वे सुधर्माधिग-
तास्साचिवाः पीत्वाऽऽत्मश्रोत्रचुळकैरमन्दानन्दतुन्दिलहृदन्तरा
बभूवुः ॥ १४७

किरीटी कोदण्डी कुटिलगुणदण्डी गुणनिधिः
जितारिर्जीमूतश्श्रुतचरितहेमाङ्कशिखरः ।
मुकुन्दः कुन्दश्चेत्यवनिपहितास्तेऽष्टसाचिवाः
स्थिरेशालोकार्थं द्रुतमुपवनं प्रत्युपगताः ॥ १४८
समायातास्सभ्यास्समधिकमुदुन्मेषसहिताः
समस्तास्तैस्साकं सवानितसहस्राक्षसदृशम् ।
समानेतुं स्वाराडुपवनसमानान्मधुवनात्
सभक्त्युन्मेषं तं सदमलमतिं सासनृपतिम् ॥ १४९

गद्यम्—एवमेते ससचिवास्सभाजना बहिरवस्थितेन राजज्ञानिवेदनसन्नाहितेन रथेन सूतानीतेन सह परिजनेन, चासेदुरनुपमानभवनमुद्यानवनम् । १५०

समागतास्तत्र समुल्लसन्तं प्रियायुतं ते ददृशुर्नरेश्वरम् ।
शचीयुतं शक्रमिवावनीं गतं समीक्षितुं तद्वनरामणीयकम् ॥ १५१

नेमुर्विभुमातिविनता निजनिजनामान्युदीरयन्तस्ते ।
अमरा इव हरिहयमतिमहितास्सर्वे प्रियासहितम् ॥ १५२

राजा ततस्समवलोक्य निजानमात्यान्
प्रद्युम्नशेखरमुखानखिलान् विनीतान् ।
पृच्छन्नसौ कुशलमीरितनैजभद्रान्
आमोदयत्स्वकुशलस्य निवेदनेन ॥ १५३

गद्यम्—तदनु धरामरेशस्तान् स्वकुशलोपपादनोत्खाता-त्मीयाविरहात्मकहृदयशल्यान् अखिलोपलाल्यराजकार्यधुर्यता-कल्यान् उपलालयामासान्, निवेश्य च रथे देवीं स्वयमपि निषण्णः, संचोदय रथ्यानित्यभिजगाद सूतवरम् ॥ १५४

सोऽयं विमुच्य रयनिर्जिततार्क्ष्यवात-
वेगाश्वसंयमनधीरतरांस्तु रश्मीन् ।
प्राचूचुदद्रथमनेकजनावकीर्णं
आद्वारमद्भुततरं नगरस्य तस्य ॥ १५५

गद्यम्—तत्र च राजावलोकनकुतूहलेन, क्वचन समुदाय-वस्थितैः, क्वचन विरळावस्थितैः, क्वचनोर्ध्वदेशावस्थितैः,

क्वचनाधोऽवस्थितैः, क्वचनोपविष्टैः, क्वचनोत्थितैः, क्वचन शनैश्शनैस्सञ्चलद्भिः, क्वचन धावद्भिः, क्वचनान्यत्रोपसर्पद्भिः क्वचन किञ्चिदापृच्छमानैः, क्वचन किञ्चिद्ब्रुवाणैः, क्वचन किञ्चिदाकर्णयद्भिः क्वचन किञ्चिद्विचारयद्भिः, क्वचन किञ्चित्तपश्चरणक्षीणविग्रहतायामप्यामासावसानं किमेतदत्यद्भुतं महो महाराजस्येत्याश्चर्यावलिप्तान्तरङ्गैः, पत्तनान्तर्गतैः, नरपुङ्गवसङ्घैस्संगतात्सङ्गापणवीथिकामवलोक्य पुरीं हेमवतीमन्यपुरीपरिभाविकां प्रविश्य पुण्यलक्षणोपलक्षितैः, महासत्त्वाधिकैः, विन्ध्याचलप्रान्तैरिव, कल्याणभाजनैः कनकोर्वीधरकटकैरिव, सर्वकलासंपूर्णैः पूर्णिमासुधाकरैरिव, परदुरापतेजःप्रदीप्तैः तपस्याम्भोजिनीप्रियैरिव, सकलरञ्जनगुणगणरत्नाकरैस्सागरैरिव, बालारुणकिरणारुणीकृतैः केसरिकिशोरैरिव काश्मीराङ्गरागावलिप्तसंहननैः, खर्जूरकदळिकाक्रमुकवीटिकादिकानेकमाङ्गलिकफलानीकपरिपूरितस्वर्णभाजनाञ्चितपञ्चशाखैः, किञ्चिद्दरहासविलासोल्लसन्मुखैः, शृङ्गाररसैरिव संगृहीतविग्रहैः अधिकारिपुरुषैरन्तरा प्रत्युद्गन्तुमागतैः, निबिडितेनागत्य शृङ्गाटकेन मन्दमन्दमुपयातैः परिपूर्णजरापलितोत्तमाङ्गैः अतितरशुद्धोर्ध्वपुण्ड्रमण्डिताननैः अक्षीणलक्ष्मीकराक्षतकरण्डकाकरम्भितकरकञ्जैः वृद्धद्विजपुञ्जैः प्रयुज्यमानाः शतमानं भवतीत्याशिषः प्रतिगृह्णानः, शिरसाऽभिवाद्य, धिषणातिरस्कृतधिषणैः प्रत्येकप्रकाटितस्वनामधेयैः पतद्भिः पादयोः परमाप्तैः पौरैरनुग-

भ्यमानः, सुदूरमारचितनूतनसंस्कारं, अप्रमत्तवीरभटवारं आयोजितकरितुरगप्रान्तरं, आबद्धमणितोरणद्वारं, अतितरळशिखरालम्बितातिरुचिराम्बरैरत्युत्कटात्मकोटिविपाटिताम्बरचरवनवाटीपरिसरैः उत्तप्तहाटकोद्भटकेतुप्रकरैरलंकृतोपरिभागं, आत्मावलोकनकलितानन्दतुन्दिलपौरसुन्दरीसन्दोहसान्द्रितान्तःपुराद्दूरविश्वम्भराभासुरं, आत्ममन्दिरमनुप्रविश्य, समावेदयन्नटवीतटगतमात्मचरितमन्यूनाधिकमखिलं, आमोदयन्नाश्रितसमवायं अवधीरयन्नमित्रसमुदायं, आपादयन्नखिलमनोरथार्थसञ्चयं, आखण्डल इवान्वपालयद्यथापूर्वमुदधिमेखलामखिलां विपुलामयममलगुणरत्नगणखनिरश्वमहीपमणिः ॥ १५६

यत्कारुण्यकटाक्षपातविधुताविद्यातमोग्रन्थयः
प्रख्यातास्सुधियो भवन्ति कविताचातुर्यधुर्याः परम् ।
तद्देवीकरुणाबलाद्विरचिते चम्बूप्रबन्धेऽनघे
सावित्रीचरितामृतैर्विलसिते चाद्यो विलासोऽगमत् ॥ १५७

इत्यखण्डपाण्डित्यसमुद्दण्डपण्डितप्रकाण्डपरिमण्डितमण्डकलनगरमण्डनायमानस्य, विश्वविख्यातविद्यावैदुष्यविभूषितस्य, असमानयामुनाभिजनातिलकायमानस्य, श्रीमतो वेङ्कटरामार्यवर्यस्यान्ते वासिना तदग्रजन्मनः श्रीवेङ्कटनृसिंहार्यस्यात्मजेन वरदाचार्येण विरचिते सावित्रीपरिणये प्रथमो विलासः

## अथ द्वितीयो विलासः.

---

अथाश्वराड्दैवतगीतशौर्य-
शाली द्विषद्वातततमोंशुमाली ।
सच्छ्लाघनीयैस्स्वगुणैस्सुधांशुः
आह्लादयल्लोकमिवांशुभिस्स्वैः ॥ १

हयावनीशेन वितीर्यमाण-
दानाम्बुनिर्यन्माणिपूरितोऽब्धिः ।
तदादि रत्नाकर इत्यमानि
महीतले पण्डितपामरैश्च ॥ २

स्वतेजसाऽनङ्गसतीसहोदरा
कृशोदरा बिम्बफलारुणाधरा ।
रमेव राजीवदृशं रसोदरैः
अनन्दयत्सा रमणं स्वविभ्रमैः ॥ ३

तन्वी ताराधिनाथोज्ज्वलनिजवदना तर्कयन्ती विधातुः
वाक्यं वर्षावसानं व्यरचयदमिताभीष्टदानि व्रतानि ।
पश्चात्पत्युस्सकाशात्परममुदमगात्पावनापत्यकामा
पाकारातेस्सकाशात्पातिहितचरिना सा पुलोमात्मजेव ॥ ४

सा रामाऽथ मनोरमतमा गर्भं वहन्ती तदा
पृथ्वीशार्पितमात्मवंशजलधे राकाशशाङ्कायितम् ।
जीमूतार्पितमम्बुबिन्दुमिव सच्छुक्तिस्ततः प्रसहं
शोभां कामपि संदधार कमितुः कौतूहलापादिनीम् ॥ ५

उपचितावयवा समयक्रमात्
परमराजत पद्मदलेक्षणा ।
अनुदिनोदितपल्लवदीपिता
द्युतिमतीव सुदिव्यतमा लता ॥ ६

आनीलचूचुककुचद्वयमायताक्ष्याः
आसक्तभृङ्गमिव पङ्कजकोशयुग्मम् ।
प्राप्यापि कञ्चुकनिबन्धनमाप वृद्धिं
भूमौ निरुद्धमपि बीजमुपैति वृद्धिम् ॥ ७

कतिपयवासरेषु गतवत्सु महीदयित-
प्रियतमया धृतस्सपदि गर्भभरोऽलसया ।
व्यरचयत क्रमादनवलोकनमार्गगतं
मगधसुतावलग्नमवलोकनमार्गगतम् ॥ ८

नाभीकूपतटोद्गता नवनवा श्यामा मनोहारिणी
जाता रोमलता तिरःप्रचालिता याता वळीनां त्रयी ।
स्रस्तं सैकतसन्निभं सुललितं साध्वीनितम्बस्थलं
नाभिर्गाधतरा बभूव नळिनारात्याभमासीन्मुखम् ॥ ९

भर्त्रा क्षिप्तं वरतनुरियं गर्भमाधत्त देवी
यस्मादित्थं विमलमनसा भूभुजामुत्तमेन ।
तज्जाताऽस्यास्सरसिजदृशः केतकीगण्डपाळेः
मृद्व्येच्छा मधुरिमगुणे वस्तुजाते स्थितेऽपि ॥ १०

गद्यम्—ततः परमेकदा तु सा कठोरतरदुर्भरावयवभारा मारहितदारार्थितोदाराकारा, दूरीकृतदुराचारा, सर्वदासर्वसंस्तुतसदाचारा, मद्रवसुन्धरापतिमहिषी, पूर्णेषु नवसु मासेषु, विमलतरविधुकरनिकरविभूषणविभूषितासु विभावरीषु, विरळतरतारकाकोरकाविकीर्णेषु वियद्वीधीविभागेषु, सुरभितरमालतीसुमगन्धसुगन्धिपवनेषूपवनेषु परिपाण्डुरपयोधरपरिशुद्धपटपटलपरिष्कृतासु प्राच्याद्याशाप्रमदासु, जैत्रयात्रायुक्तेषु जगतीपतिषु, पत्यागमनमुदितविरहिणीहृदयेष्विवापहतकालुष्येष्वखिलकासारान्तरङ्गेषु, सत्पुरुषचरितेष्विव सर्वलोकरञ्जनेषु, उपचितशोभासमागतेषु, समागतेषु शरद्वासरेषु, पक्षे वळक्षे शुभतरे वासरे, निखिलजनहृदयानन्दकरे विहतानिष्टे सन्मौहूर्तिकाभीष्टे, लग्ने भद्रसंलग्ने, प्राचीव पूर्णिमामृतांशुमण्डलं, अमृताम्भोधिरिव कौस्तुभरत्नं, असूत कन्यकारत्नम् ॥ ११

तत्कन्यातनुविभया तपनीयगृहाभमाखिलभवनमभूत् ।
भव्यतमभर्मभाया महसा मायाः पयःपयोधिरिव ॥ १२

मुमुदे तनयां निशाम्य जातां

मुकुळीभूतविलोचनाञ्चिताम् ।
तनुजातनुशोभया हयेश-
प्रियजाया प्रतिलिप्तविग्रहा ॥ १३

अनन्तरमभून्महीदयितमन्दिरं सुन्दरं
त्वमन्दतरमन्दरप्रमथिताणर्वाभ्यन्तरम् ।
महोर्मिनिनदैरिवाहतमृदङ्गभेर्यानक-
प्रणादकलितप्रजाकलकलैस्समापूरितम् ॥ १४

निशम्य तनयोदयं निजमहीमहेन्द्रस्य त-
त्पुरं परमलङ्कृतं पुरजनाः प्रचक्रुर्मुदा ।
महार्हमणितोरणैर्महितकायमानैर्महा-
ध्वजैर्मसृणमौक्तिकाञ्चितवितानकैश्चाद्भुतैः ॥ १५

गद्यम्—ततः परमधिपो मद्रजनपदस्य, अपगतबालारिष्टाद्यनिष्टां, अशेषविष्टपाधीशतनूजोत्कृष्टां, अमृतमयूखरेखामिव दिष्टवशादवनीतलगतां, अमरमहिळाललत्पाणिकमलच्युतामिव पारिजातकुसुममञ्जरीं आत्मतनुप्रभाभिभूताचिरप्रभामालोक्यात्मकुमारीं, आनन्दामृताम्भोधिमज्जनमाचरन्नप्याकलितजलावगाहनः, समतिक्रान्ते दशमेऽहनि समागते चाहनि दशमाधिके, पुण्ये मुहूर्ते पुरोहितपरिकीर्तिते गाः कोटिशः सुवर्णं चात्मनामधेयसुवर्णप्रकीर्णमवनीसुरसाद्विधाय, अमृतानिमित्तामरानिर्मथ्यमानामृततरङ्गिणीरमणतरङ्गारवभङ्गीमङ्गीकुर्वद्भिः, गम्भीरतरभेरीपुरस्सरमाङ्गळिकास्तोककाहळानकवेणुशङ्खढक्किकाध्वानोत्करैः अ-

तिवेलजनकोलाहलबहुलीकृतावनीसुरस्वस्तिवाचनिकसंरावैश्चाति-संकुलायामुत्सववेलायां, अखिलानुमत्या सरसिजसम्भवसद्भावित-गौरवेण विशेषतो विद्योतमानां, विद्याधिदेवतानुकम्पामिव विधृताविग्रहां, अगृहीतिशोभावग्रहां चकार सावित्रीं नाम्ना तां कन्याम् ॥ १६

ततः—

ताम्बूलामलवस्त्रपात्रमणिभूदानादिभिर्भूसुरान्
हृष्टान् बन्धुजनाप्तवन्दिमगधान् चेटीजनांश्च प्रभुः ।
कृत्वा भोजनपूर्वकं स्वयमपि प्रीतः कृतार्थोऽभवत्
स्रष्टुर्दिव्यदयातिरेकविभवान् सञ्चिन्तयन्मानसे ॥ १७

तन्नामकरणवैभवतदुत्सवालोकलोलुपो लोकः ।
तत्राभूत्पृथिवीपतिपरिरचितात्पारितोषिकात्प्रीतः ॥ १८

यातो यथागतं तन्नृपशासनतस्समन्ततस्स्वपदम् ।
साधुस्स सर्वलोकस्स्वस्त्यस्मै सादरं शंसन् ॥ १९

तदनु तावत्—

सावित्री सर्वलोकप्रथितनृपसुतारूपसौभाग्यजेत्री
सारस्वत्याः कृपायास्सकलसुरसदाप्रार्थितायास्सुपात्रम् ।
सा स्रष्टुस्सर्वनारीकरणपरिणता चातुरीवात्तगात्री
भेजे चान्द्री कळेवान्वहमपि वयसा वृद्धिमश्वेशपुत्री ॥ २०

कन्येयं कमनीयकाञ्चनमयी पाञ्चालिका वा कला

वेन्दोः कञ्जभवातिभूरिकरुणा वा कल्पिताङ्गा भुवि ।
मा वा मद्रनरेन्द्रसत्कृतभवोमा वा तु नो मानवी-
त्येवं तामवलोक्य मुग्धनयनामूचुस्तथा नागराः ॥ २१

सकृत्पांसूत्क्षेपैस्सकृदनुपमेयैर्विलसितैः
सकृन्मृत्पाञ्चालीकरणनिपुणाळीसहगतैः ।
सकृल्लीलानृत्यैस्सकृदतुलहेलाकलकलैः
अमन्दामोदं सा व्यतनुत सवत्रीजनकयोः ॥ २२

माध्वीकमृद्वीकसुखण्डसार
माधुर्यधुर्यैर्मसृणैर्वचोभिः ।
साऽतोषयत्साधु सबालवृद्धान्
स्वान् बन्धुलोकान् सकलान् किशोरी ॥ २३

बाला बालमृणालकोमलवपुर्लीलाविलासान्बहून्
बाल्याहार्न्बहुमानभाजनतमान्बालेन्दुफालोज्ज्वला ।
कुर्वाणा स्वविलोकनोत्सुकजनानाश्चर्यसिन्ध्वन्तरे
मग्नान् सा सततं चकार चपला चञ्चच्चकोरेक्षणा ॥ २४

वाचं शीतकरे कुरङ्ग इति संश्रुत्याळिसञ्जल्पितां
सावित्री सकळङ्कमिन्दुमथ संप्रेक्ष्याहसत्सा मुहुः ।
मन्ये तत्क्षममित्यसौ धुरि यतस्तत्सौम्यवक्त्राज्जितः
तन्नेत्रेण जितं कुरङ्गमुदरे धृत्वा समुज्जृम्भितः ॥ २५

सोत्प्रासान्मृगलोचना मृगधरं संलोकयन्तीं सखी·
मित्याहाम्बुजयोनिरेनमसृजत्सद्वस्तुसारांशकैः ।
चक्रेऽन्तर्मषिकाङ्कनं कुजनदृग्दोषापहारोचितं
नोचेच्छीतकरे कुतश्शुचितरे स्यात्कृष्णसारागमः ॥ २६

सारा सारसनयना सालसगमना सुराङ्गनाकारा ।
सारङ्गसदृशचिकुरा सा रामा स्वाळिकेळिरसलोला ॥ २७

पूषोपममणिभूषा वेषाधरितामरेशवरयोषा ।
सैषाऽऽसीद्गतदोषाऽशेषाभिनुताङ्गवैभवविशेषा ॥ २८

स्तोतुं वाक्पतिरक्षमोऽभवादिमां द्रष्टुं सहस्रेक्षणः
तत्सौन्दर्यमहीश्वरो गुणगणान् संख्यातुमप्यंशतः ।
चन्द्रास्यां चपलामनोहरतनुश्रीभासमानां शुभां
को वा वर्णयितुं क्षमेत मनुजः पद्मेक्षणां तां भुवि ॥ २९

एवं बहुलीलानिशलोला यातेषु दशसु वर्षेषु ।
उचितं वपुषि विलासं वयसस्समधत्त सैन्धवेशसुता ॥ ३०

तदनु—

तदङ्गमालिङ्गति यौवने यथा
वनं वसन्ताधिगमे मनोरमे ।
शाणे स्वबाणोत्कषणं शनैश्शनैः
कुर्वन् मुदा भेत्तुमियेष तां स्मरः ॥ ३१

संप्राप्ते सरसे तु यौवनमधौ सा सुन्दरी वल्लरी
जाता पल्लवतल्लजाधरदळप्रद्योतमाना ततः ।

जाताऽस्यच्छकुचाद्रिगुच्छकलिता जाताऽथ पुष्पोच्छ्रिता
जाताऽऽमोदयुताऽथ कोकिलरुतोपेता च जाता ततः ॥ ३२

कान्ताननेन्द्रपुत्रीजननिकरसमाकाङ्क्षिताभा नितान्त-
स्वान्तस्संगुप्तकान्ताभिरुचिरलिचयभ्राजमानालकान्ता ।
सा रेजे सूनबाणासनकरविलसत्खड्गवल्लीव सर्व-
क्षोणीपालान्तरङ्गप्रमथनकलनारम्भसंरम्भरूक्षा ॥ ३३

अहर्निशमितोदयादधृतसंविकासक्षयात्
अनाश्रितजडाश्रयादनुपमेयशोभालयात् ।
नरेन्द्रतनयाननात्परिभवं गतावब्जत-
द्रिपू विविशतुर्ध्रुवं जलमहाबिले लज्जया ॥ ३४

तद्बाहासमतां मनाक्कलयितुं स्वर्गापगासन्निधिं
याता कल्पलता चकार सततं लोलज्जटाढ्या तपः ।
मौनात्पुष्पपरागभूतिभरिता नागात्तथाऽप्यर्हतां
तस्मात्तत्समतां प्रयातुमधुनाऽप्यस्मिंस्तपस्यत्यलम् ॥ ३५

तदूरुसाम्यं कदळीकरीन्द्रकरौ ग्रहीतुं कथमार्हतां वा ।
कबन्धगर्भा कदळी यतोऽभूत्करीन्द्रहस्तो यदभूच्च दुस्त्वक् ॥ ३६

तदङ्गकौपम्यमगम्यमन्य-
स्त्रीभिर्न युक्तं तटिताऽपि लब्धुम् ।
यत्सा प्रभा निर्मथितान्धकारा-
ऽप्यभूद्घनान्तर्वशगा चला च ॥ ३७

तामेनामभिवर्णयेज्जगति को ब्राह्मप्रसादोद्भवां
तन्वीं पञ्चशरातिशातशरदृक्कोणां कनङ्ग्रूषणाम् ।
वीणावादनसंप्रवीणफणिराड्गीर्वाणशोणाधरा-
श्रेणीसाधुपणायिताद्भुतगुणां सल्लक्षणैर्लक्षिताम् ॥ ३८

सुधासुमधुराधरां सुरवधूसुशोभाधरां
सुलोचनसुनासिकासुमुखभासुरां सुस्वराम् ।
सुफालफलकान्वितां सुभगकुन्ददन्ताङ्कितां
सुतां नरपतेस्स्तुमस्स्मरधनुर्लताभ्रूलताम् ॥ ३९

यौवनवसन्तलक्ष्मीकलिता वनितालतोत्तमा ललिता ।
मदनविनोदोत्सवभूर्जाता जाताऽतिकोमलता ॥ ४०

गत्या हंसीमपि जितवती कोकिलाळीं च गीत्या
वृत्त्या वाचां विधुतसुधया सा शुकीं शारिकां च ।
इत्यात्माज्ञारतभटपरीभावमालोच्य कामः
कोपाटोपादिव नृपसुतां बाणलक्षीचकार ॥ ४१

रतेरपीदं लावण्यं नासीद्राजसुतागतम् ।
लोके तां दर्शयन्मारः प्रहरन्नापि नात्रधीत् ॥ ४२

गद्यम्—एवमारूढयौवना, यौवनानुरूपरूपाभिनिर्जितपद्मभवना, भवनावितहंसाध्यापितभव्यतरात्मगमना, मन्देतरभुवनानन्दकन्दसौन्दर्यधुरन्धरसुन्दरीसन्दोहसमुत्पादनाभ्यासदृढीकृतारविन्दमन्दिरकरचातुरीव कल्पितशरीरा, कामिलोकाख-

र्वगर्वसर्वस्वापहरणप्रसर्पद्दर्पकन्दर्परञ्जत्करकञ्जाकाण्डगळितेव करवाललता, पश्यज्जनलोचनामृताञ्जनवर्तिकेव कञ्जयोनिपरिकल्पिता. पद्मेव प्रसन्नपुण्डरीकलोचना, पार्वतीवानवरताश्रित शङ्कराभिनन्दिता, गङ्गेवाकलङ्कशुभ्रांशुविराजितशिवोत्तमाङ्गविराजमाना, भारतीव लोकेशाभ्यर्थनीयरूपा, वनानिधिवेलावन मालेव अतिनीलतमालकजाला, पुरुषोत्तमवक्षस्थलीव अनन्य सुलभलक्ष्मीनिकेतनभूता, कौमुदीव निजविभवामोदितकुवलया, तिरस्कुर्वतीव द्विजराजलक्ष्मीसमृद्धीकिरणपटुतया द्विजराजलक्ष्मीहरणपटुतरां वासरलक्ष्मीं, अनवरतमित्रोल्लासकरस्वश्री कतया अधःकुर्वतीव मित्रावसानसमयोरीकृताप्रतीकाशस्वप्र काशां राकानिशां, कामवैजयन्तीव आखिलयुवलोकधैर्यहरणार्थमङ्गीकृताङ्गा, मद्रवसुन्धरापुरन्दरमानन्दयितुमादराद्धृतमनोहरशरीरा साम्राज्येन्दिरेव तन्मन्दिरान्तरविचरितविहारा, परा देवतेव पञ्चशरोदञ्चत्पराक्रमप्रपञ्चस्य, परां कोटिमापन्ना गिरां पण्डितानां, प्रमदारूपेण परिणता महाराशिरिव प्रसूजनयितृप रिकलितपरमव्रतफलानां, अमराणामप्याश्चर्यापादनधौरेयरूपधेया रराज राजतनया ॥ ४३

मराळिका मधुकारिका मरीचिका
मधूळिका मदातिलकेति सुभ्रुवः ।
मदालसा मदनविलासभूमयो
महोज्ज्वलाः परमभवन् सखीजनाः ॥ ४४

सखीभिस्साकं सा सततकृतलीला सरसिजा-
हितास्या सर्वोर्वीदयितहृदयाकर्षणचणा ।
मनस्याकाङ्क्षन्ती दयितमनुरूपं मनसिज-
प्रतापप्राचुर्यापलपनपराऽऽसीत्प्रतिपदम् ॥ ४५

कदाचिदश्रावि कलानिधिप्रभो
युवा कलानाथकुलप्रदीपकः ।
हयावनीन्द्रात्मजयाऽत्र सत्त्ववान्
इति श्रुतस्साल्वमहीपतेस्सुतः ॥ ४६

कर्णाकर्णिकया श्रुतं कमालिनीकान्तप्रतापान्वितं
कल्याणाचलधैर्यमार्यचरितं कल्याणवर्णाङ्कितम् ।
साल्वक्ष्मापतिनन्दनं स्वदयितं सञ्चिन्त्य सा सन्तता-
नन्दाऽनन्दयदालिलोकमतुलानन्दं स्ववाग्विभ्रमैः ॥ ४७

यदाद्यम्भोजाक्षी प्रथितगुणभारं क्षितिपतेः
कुमारं शुश्रावासमशरसमाकाररुचिरम् ।
तदादि स्नेहार्द्रा सुमशरशरासारशकली-
कृतोदारस्फारानघतरशरीरा समभवत् ॥ ४८

निद्राभाववशान्नितान्तविधुरा निद्रां गता जातु सा
माराकारमधर्मदूरमरिदुर्वारं तमात्मेश्वरम् ।
स्वप्नेऽदृष्टचरं समीक्ष्य मधुरं तस्याधरं सादरं
पीत्वा तत्परिरम्भणोत्सुकमनाश्शेषामनैषीन्निशाम् ॥ ४९

प्रातर्बुध्वा प्रकाश्य प्रियतमचरितं प्राणकल्पाळिपाळौ
सा स्वप्ने स्वानुभूतामितदयितकृतप्रेमपूर्वप्रमोदम् ।
स्मारंस्मारं तमेवासकृदसकृदसंदर्शनात्तन्मुखेन्दोः
तन्वी मूर्छान्विताऽभूत्क्षणमथ चालिता जागरूका च भूयः ॥ ५०

वपुस्तस्याः कार्श्यं गतमभजतां मार्दवमधः
कृतेभेन्द्रोत्कुम्भौ मदनपदपीठौ घनकुचौ ।
कपोलौ व्यालीनावनुदिनमभूतां मुखमभूत्
अहश्चन्द्रप्रायं तुहिनतुलिताऽभूद्द्युतिरपि ॥ ५१

नाहारग्रहणे मतिस्समभवत्सक्षीन्द्रपुत्र्यास्सखी-
संभाषासु च पादपद्मविनमच्चेटीप्रसादेऽपि वा ।
किंत्वस्यै समरोचताळिकाळिता शय्या प्रसूनाश्चिता
सा माराभिहता लतेव ललिताऽभूद्वातधूताऽसकृत् ॥ ५२

अथ मगधसुता शरत्स्रवन्ती-
मिव तनयां कृशतां गतां निशम्य ।
अपगतभयसम्भ्रमानुषङ्गाऽ-
प्यतिचकिता समभूत्तदा मृगाक्षी ॥ ५३

कुतो नु सैषा कृशतां गताऽथवा
भवेद्गदाद्वा विदिताच्छरीरजात् ।
इतीव सा संशयिताऽश्वराड्वधूः
व्यचिन्तयत्तत्प्रतिकर्तुमात्मनि ॥ ५४

विजयकमलां निजालिं विनततमां साऽश्वराण्महिळा ।
तनयार्ति प्रतिबोद्धुं तन्निकटं प्राहिणोत्तरसा ॥ ९५

गद्यम्—अथ साऽनन्यसीमन्तिनीसामान्याखिलराजन्यभामिनीसंमान्यसौजन्यसाम्राज्यसीमा, विजयकमलानामाभिरामा, देवीवयस्योत्तमा, निदेशतस्तस्यास्समागत्य बहुलतरभद्रभाजनं भर्तृदारिकाभवनं. तत्रानुदिनाभिवर्धमानानूनसूनवाणासनवेदनातिदूनां साल्वावनीसंक्रन्दननन्दनसद्गुणसंतानसंस्मरणौषधसेवनेनाप्यत्युल्बणमनोरोगां, अनवरतानूनलक्ष्मीनिकेतननिजानननिर्धूतनीरजाभिमानामप्यतिदीनवदनामश्वावनीन्द्रनन्दनामवलोक्य सन्निपत्य पदयोः, समुद्विग्नहृदया सानुनयं रहसि तामपृच्छत् ॥ ९६

बाले! बालमृणाळनाळमृदुळे! बालेन्दुफालोज्ज्वले!
वक्त्रश्रीस्तव कृष्णपक्षशशभृल्लक्ष्मीरिव क्षीणताम् ।
किं? याताऽधरपल्लवोऽरुणतमः किं? पाण्डुपत्रोपमः
किं? पीनं मृदुतामगात्कुचयुगं किं? स्विन्नमङ्गं भृशम् ॥ ९७

मया साकं किं वा न रचयसि संभाषणामिमां
त्वदीयाम्बादूतीं विजयकमलां विद्ध्युपगताम् ।
पिधायाक्षिद्वन्द्वं किमु सुचरिते पश्यसि न मां
प्रियोक्त्या देव्यास्ते सविधमुपयाताऽस्म्यभिहिता ॥ ९८

सा भामिनी श्रवणमार्गगतां निशम्य
तां वाचमात्मविषयां समुपेत्य संज्ञाम् ।

कस्यास्त्वियं खलु भवेदिति संविचिन्त्य
मेने स्वरेण निजमातृसखीरितां ताम् ॥ ५९

तदनु तां परिवर्त्य विलोचने
विरचिताम्बुजगर्वविमोचने ।
नृपसुता निजमातुरुपान्तयतः
सबहुमानमलोकयदागताम् ॥ ६०

विलोक्य विश्वासभराद्विनीतां
आकृष्य हस्तेन मनाक्समीपे ।
कृत्वा तदालिङ्गनमायताक्षी
न्यवेशयत्सादरमासने ताम् ॥ ६१

सा राजपुत्री निपुणा नितान्तं
आकल्पितात्यन्ततरोपचारा ।
हस्तेन हस्तं परिगृह्य हर्ष-
प्रस्फीतचित्तामतनोद्वधूं ताम् ॥ ६२

प्रहर्षयन्ती प्रमदा स्वमातुः
आलिं रहस्यात्मगतामवस्थाम् ।
वक्तुं समस्तां कलिताभिलाषाऽ-
प्यवाप्य मोहं पुनराप संज्ञाम् ॥ ६३

तदुदितवचनस्य साधु शय्या-
तलविनिवेशितपाणिरुन्नमय्य ।

मुखमलकविकीर्णमायताक्षी
प्रतिवचनं प्रददौ प्रकीर्णबाष्पा ॥ ६४

मातुस्सखि! त्वां किमु वच्मि मामिकां
दशां मनोजाकलितां मनःप्रिये ।
काऽन्या जनन्याऽपि च माननीयया
त्वया विना मान्यतमा भवेन्मम ॥ ६५

गद्यम्—अतस्ते विज्ञापयाम्याकर्ण्यतां तदिदं भवत्या ॥ ६६

शीतांशुप्रतिमाननस्सखि! मया श्रीसत्यवान् स श्रुतः
कर्णाकर्णिकया मनस्तु मम तच्छ्रुत्वं पुनर्नागतम् ।
स्वप्ने तन्मधुराधरो धृतसुधः पीतो यथेच्छं मया
तद्वृत्तेन कृतं तदा न हि ततो जाने किमासीदिति ॥ ६७

पूर्णचन्द्रनिभं तस्य स्वप्ने दृष्टं मया मुखम् ।
तच्चक्षुर्गोचरीकर्तुमुपायोऽद्यापि नेक्षितः ॥ ६८

दयादूरो मारस्सखि! मम शरीरे शिततरान्
शरान् सूनाकारानपि कुलिशसारान् कलयति ।
विधुश्चाग्निज्वालान्किरति हिमरूपैरपि करैः
व्यथां किं वच्मि स्वां मलयपवनो यां प्रथयति ॥ ६९

चन्द्रे शीतलतां वदन्ति सखि! ये तेऽसत्यवाचो न किं
सा भूयो विचिताऽपि नात्र सकृदप्यासीन्मया लक्षिता ।

शुद्धोऽपि द्विजराज इत्यभिहितोऽप्यस्मादृशीनां दह-
त्यङ्गानीन्दुरनागसामपि यतो दृष्ट्या समालोकितः ॥ ७०

किञ्च—

श्रिया साकं श्रीमत्यमृतजलधाविन्दुरुदितोऽ-
प्यनालोच्य स्नेहं श्लथयति तदावासकमलम् ।
कळङ्की तत्प्रोक्तः कुटिल इति सर्वैस्स भगिनी-
धुगन्यस्त्रीद्रोहं वद कलयितुं नेच्छति कथम् ॥ ७१

चन्द्रे नैल्यमिदं कळङ्क इति संजल्पन्ति केचित्परे
सारङ्गोऽब्जापिचण्डमध्यगत इत्याहुर्मृषा तद्गिरः ।
तज्जन्मावधि तद्गतं किमिति चेत्तत्सम्यगावेदये
मादृक्स्त्रीवधजातमेव कलुषं तद्गात्रलग्नं ध्रुवम् ॥ ७२

इन्दोर्दोषाकर इत्यभिधां द्रुहिणस्स्वयं व्यधादिति युक्तम्
मित्रावसानसमये स्वश्रीप्राचुर्यमातनोति यदेषः ॥ ७३

गुरुद्रोही याति प्रतिदिनमयं क्षैण्यमिति स
त्पथस्थोऽप्यस्यासावभवदपकीर्तिस्सुमहती ।
अमुष्येन्दोः केयं कुमतिरबलानां विरहशु-
ग्विधूतानां प्राणापहरणविधावम्ब वद मे ॥ ७४

मदनस्य मानिनीहृन्मर्मभिदस्त्रस्य मार इति नाम ।
मादृग्विधाबलानां मारणकरणाद्यथार्थतामाप ॥ ७५

पुरा पुरारिफालाग्निभस्मीभूतोऽभवत्स्मरः ।
इति प्रतीतिर्वितथा जाता मद्विषये न किं ॥ ७६

मलयपवनो मदीयान् प्राणानादाय गूढमतिवेगात् ।
गच्छति मदनादेशादाशुगसंज्ञां विधातुमिव सार्थाम् ॥ ७७

कान्ते! कान्तः पाययित्वाऽधरं द्राक्
अन्तर्धानं मे मुषित्वा मनोऽगात् ।
स्वप्ने तत्संशोषयत्यङ्गमेषा
चिन्ता सोऽयं यन्मयाऽभाषि नेति ॥ ७८

गद्यम्—सुसुखि! किमिदानीं बहुधानिवेदनेनानादृत-मर्यादायाः कदाऽप्यानितरगोचरायास्स्वात्मैकवेद्यायाः पञ्चसा-यकसंरचितव्यथायाः परमार्थमाकर्णय मामकं मनोगतमनवशेष-मभिवक्ष्यामि ॥ ७९

सखेन्द्रदिव्याननदर्शनं विना
सत्यं न मे जीवितमत्र संवसेत् ।
सा त्वं मदम्बामुपगम्य वेगतः
संगोप्य चैतां वद मामिकां व्यथाम् ॥ ८०

मातुः प्रिये! मामकजीवितं तु ते
पाणिं गतं संप्रति तत्त्वया तथा ।
मत्कान्तसंदर्शनसम्पदुद्भवां
कर्तव्यमेषा मुदमाप्नुयां यथा ॥ ८१

गद्यम्—इत्थमावेदितात्ममनोरथया भर्तृदारिकया परमनुनीता प्रस्थापिता च सप्रश्रयं सानुतापं विनिर्गत्य तदीयभव्यतरभवनान्तरात्, अमन्दमणिसंदोहबन्धुरमन्देतरशिखरचुम्बितपुरन्दरपुराण्यतिक्रम्य मन्दिराण्याजगाम परममनोहरप्रभाप्राग्भारागारोदारहीरगोपुरद्वारवारातिरुचिरमचिरमप्रतिममाळवीमहान्तःपुरं, अतिललितलवलीलताकोमला कोमलकमलारिकलाविमला सा विजयकमला ॥ ८२

मराळिकाद्यखिलतदाळिपाळिकाः
प्रकाशितां नृपसुतया स्मरव्यथाम् ।
निशम्य तत्परिहरणोचिताः क्रियाः
त्वरान्वितास्समकलयन् यथोचिताः ॥ ८३

मृणाळनाळान्मृदुलान्मराळिका
न्यवेशयत्कण्ठतले मरीचिका ।
न्यधादुशीरान्वितचन्दनं हृदि
स्तनद्वये च प्रसभं मृगीदृशः ॥ ८४

मधुकारिका मधुलालितप्रसूनशय्यां चकार मृद्वङ्ग्याः ।
मकराङ्कबाणकलितव्रणव्यथाहरणधौरेयीम् ॥ ८५

मधूळिका श्रुतिमधुराः कथाः क्रमात्
प्रतिक्षणं प्रचुरतरं व्यबोधयत् ।

मनोहरं मदतिलका विशेषकं
मुखे व्यधान्मृदुहिमवालुकामयम् ॥ ८६

सदागतिव्यथितलतासमानना·
समन्विता मनासिजबाणसंहता ।
निनाय सा बहुविधसेवया मनाक्
अनेहसं हयधरणीपतेस्सुता ॥ ८७

गद्यम्—विजयकमला तु विपुलाधिपमन्दिरमधिगम्य प्रविश्य चान्तःपुरं तत्र सन्ततानन्तसीमान्तिनीसन्तानसंस्तूयमानासमानसाधुशीलायास्साधुशीलाभिलाषितलालितलक्षणजालायास्स्वलक्षणजालानुरूपाभिरूपाभिभूतामरवरवर्णिनीरूपवैभवलीलायास्सन्निकर्षं गता देव्यास्साण्तिमहीन्द्रस्य, नत्वा तां, स्तुत्वा च, मस्तकतलविन्यस्तहस्तकमलकोशा प्रस्तुतामतिविस्तृतां व्यथां तत्सुतागतामाख्यातुं तदान्तिकस्था बभूव ॥ ८८

विनतार्ऽपगमपदवी विनतां तां मालवी विलोक्याह ।
किं कुशलिनी कुमारी कृशोदरी मे वदाशु मुग्धेऽद्य ॥ ८९

तद्वचनात्तत्तनयागतां व्यथां तां विलोकितां राज्ञ्यै ।
विजयकमलाऽभिवक्तुं निष्कलुषा निरवशेषमारभत ॥ ९०

गद्यम्—देवि ! दीनावनपरायणे ! समाकर्णय सुतागतां व्यथाम् ॥ ९१

जेता यस्सुरविद्विषां भवति यश्छेत्ता गिरीणामहेः
हर्ता यस्त्रिदिवस्य यस्त्रिजगतां भर्ता च धर्ता पवेः ।
तस्याश्चाक्षितिनेतुराशरवधे मित्रस्य पुत्रीं हरेः
सावित्रीं किमु वच्म्यहं प्रहरते पुष्पास्त्रजालप्रशरैः ॥ ९२

अपिच—

उदयति हिमरश्मौ मानिनीमानशत्रौ
मदनकितवमित्रे देवि! ताराकळत्रे ।
पिहितमुखसरोजा वेदनावेपमाना
गमयति रजनीस्सा कौमुदीकान्तिरम्याः ॥ ९३

किंच—

सा पुत्री तव देवि! मन्दपवने दैन्यं भजत्याविला
सन्ध्यायां चलिते सखीभिरसकृत्पृष्टाऽपि नाशंसति ।
नादत्ते मधुरं घृतान्नमपि वा पक्कं फलं वा पयः
किन्त्वम्भोजमयीं सखीविरचितां शय्यां रहः काङ्क्षति ॥ ९४

सखीभिः क्रीडां वा न खलु कुरुते स्वादुवचनैः
इयं कर्णामोदं न कलयति बाला बहुमतैः ।
स्तनौ नेत्रस्रस्तैरशिशिरतरैरत्यविरळैः
असौ बाष्पैस्सिक्तौ रचयति मुहुर्जृम्भणभवैः ॥ ९५

शुकीं क्षुत्क्षामाऽहं वितर कमपि स्वादुमशितुं
त्वमाहारं नो चेत्क्षणमपि न जीवेयमधुना ।

इतीवोत्ताम्यन्तीं सकृदपि न ते पश्यति सुता
तदीयालापान्वा न कलयति कर्णान्तरगतान् ॥ ९६

आज्ञप्ताऽहं त्वया तद्भवनमधिगता तत्र नामात्तशय्यां
निर्निद्रां निश्वसन्तीं निरवधिमदनोन्निद्रबाधाकुलाङ्गीम् ।
अद्राक्षं शोचनीयामथ विधुरमनाश्चक्षुरुन्मील्य सा मां
नाद्राक्षीन्नापि पुत्रीत्यसकृदपि मयाऽऽहूयमाना बभाषे ॥ ९७

उद्धृत्याङ्के निवेश्य क्षणमथ सलिलक्लिन्ननेत्रारविन्दां
तन्नेत्रे संप्रमृज्य प्रसभमधिगतप्रत्यभिज्ञां कृशाङ्गीम् ।
प्रीत्या संमानयन्ती प्रबलतरवपुस्तापमेनामपृच्छं
पश्चान्मां व्याचचक्षे प्रतिपदमबला सा मया लाल्यमाना ॥ ९८

सत्येन्द्रसंदर्शनसम्पदं विना
न ते सुता जीवति नानृतं वचः ।
मदीयमालोचय देवि ! सा द्रुतं
तदीयसान्निध्यगता यथा भवेत् ॥ ९९

गद्यम्—इत्थमभिधाय सा विजयकमला स्वाधिकारार्हकर्मव्यापृता बभूव ॥ १०० 

तद्वचनक्रकचच्छिन्नस्वहृदन्तरा महादेवी ।
भूत्वा क्षणं विसंज्ञा पुनरपि संज्ञामवाप साऽऽलिगिरा ॥ १०१

अन्येद्युरभ्यागतमात्मगेहं
व्यजिज्ञपत्कान्तमुपांशु देवी ।

सखीश्रुतामात्मसुताव्यथां तां
कृताञ्जलिः प्रीतिकृतोपचारा ॥ १०२

कल्याणोदरकरुणारसैकपात्रं
कल्याणी कनकलतासमानगात्री ।
सावित्री स्मरशरवेदनाधरित्री
जाता श्रीतुरगमहीन्द्र! तेऽद्य पुत्री ॥ १०३

मारक्रूरासमतरशरोद्वेलसंपीडिता सा
स्मारंस्मारं शयनसमयालोकितोर्वीशमेकम् ।
कान्ता कालं कथमिव नयेत्कान्तहीनाऽतिदीना
कान्तेनैनां कलय मिलितां कान्त कान्तेन तेन ॥ १०४

गद्यम्—अथाश्वमहीश्वरोऽप्यादरादाकर्ण्यात्मजागतानङ्गव्यथाबोधकात्मप्रियाव्याहारं, अम्बुजाभिमानाडम्बरनिबर्हणार्हेणाक्षियुगळेन तां निरीक्षमाणः, सुदुर्लभमिदमनुकूलदाम्पत्यकल्पनमस्मादृशामपि जगति. तथाऽप्येतद्धृदयसीमनि को वा युवा कलकण्ठ इव विराजते, किमेतया श्रुतः कोप्यवनीशकुमारस्सुकुमार इत्यपृच्छत्तां दयितामात्ममनोरथसंपदधिदेवताम् ॥ १०५

तदनु तं दयितं मगधात्मजा
सविनयं विनिवेदयते स्म सा ।
निशमितं तनयापरिदेवितं
सकलमाळिमुखान्तरतो यथा ॥ १०६

विपुलाक्षिविजितकमला विमलास्यविलासविधुतविधुलीला ।
विजयकमलाऽऽह विमला काञ्चिद्वाचं श्रुणोतु तां देवः १०७

कर्णाकर्णिकया श्रुतं तव सुता श्रीसत्यवन्तं स्वकं
कान्तं काङ्क्षति यत्नमारचय तत्पाणिग्रहे साम्प्रतम् ।
सस्नेहं समवेदयन्मृदु मया सन्तोष्यमाणा च सा
स्वामिंस्तत्त्वमुपेक्षसे यदि सुता सा ते न जीविष्यति ॥ १०८

यदि नो जीवति सेयं सन्ततिहानिर्भवेत्तवाश्वेश ।
मज्जननामिव वृथा स्यात्तन्मुनिमन्त्रो विरिञ्चिवचनं च ॥ १०९

अखिलावनीशनिवहः प्रतिसभमनिशं हसेत्प्रभो प्रसभम् ।
परिदूषयेच्च बन्धुप्रकरस्त्वां दोषदूरगुणभूषम् ॥ ११०

गद्यम्—तद्भवता भव्यकार्याचरणमतिमता अखिलशास्त्रतत्त्वपरिणतधिषणावता तूर्णमेव करणीयस्तत्पाणिग्रहमहोत्सव इत्यावेदयन्त्यामात्मसुदत्यां तदुदिताकर्णनप्रक्षिप्तस्वान्तस्तुरगावनीशस्तत्रैव नीत्वा निशां तां निशान्ते प्रातः कर्तव्यं कर्मारचय्य तया मगधमहीमहेन्द्रतनयया किञ्चिद्दूरमनुगम्यमानो भटचेटकसंघातसंभृतायां सभान्तस्सीमायां सिंहासनमलंचकार ॥ १११

तदानीं किल—

स्वर्लोके सुरपतिरन्तरा सुधर्मां
स्वर्वेश्यानटनमहोत्सवे प्रसङ्गात् ।

सावित्रीसुगुणसुरूपशीलभाग्यं
संशृण्वन् त्रिदशगणैस्तुतोष सर्षिः ॥ १.१२

अथाम्बुजासनतयोऽभ्रसंयमी
हरेर्गुणान् परिगुणयन् विपञ्चिकाम् ।
प्रणादयन्नमरसभान्तरात्सभा-
स्थितैस्सुरैरविदित एव निर्गतः ॥ ११३

गूढं निर्गत्य सावित्रीसद्गुणौघावबोधने ।
वीतरागोऽपि विक्षिप्तबुद्धिर्भूरि चचार सः ॥ ११४

नारायणगुणनामान्यापद्वारणकराण्यनन्तानि ।
इति बोधयितुमिवामरलोकाद्भूलोकमभ्रमुनिरागात् ॥ ११५

गद्यम्—तदनन्तरमम्बरादागच्छन्तमाहतवीणागुणक्वणनाकर्णनातिलोलुपविमानान्तरावतीर्णवियच्चरोपश्लिष्टविप्रकृष्टदेशं, गृहीतप्राग्रहरविग्रहामिव गीर्वाणभुवनधर्ममुर्वीमवतरन्तं, अप्रतीकाशात्मप्रकाशप्रकाशीकृताशमापतन्तामिवौषधीशं, अतिप्रशान्तं, अप्रतिमतेजोनिशान्तं, अश्रान्तकलहाविश्रान्तस्वान्तं, अतिविशङ्कटचटुलकपिलजटापटलजटिलितोत्तमाङ्गं, उत्तमाङ्गाकल्पकल्पितानल्पकृष्णमृगाजिनं, अकुटिलनिटलतटपटुतरपरिघटितपटीरोर्ध्वपुण्ड्रं, अपगतार्थकामतया केयमाखिलभुवनस्यानर्थसंपादनसमर्थार्थकामपरता चतुर्थपुरुषार्थप्रत्यर्थीभूता धिगेनामितीर्ष्यया किञ्चिदाकुञ्चिताभ्यामिव भ्रूलताभ्यामवष्टभ्यमानां दृष्टिमनतिस्पष्टमभितः

प्रसारयन्तं, अतिविस्तृतान्तर्विवरविनिर्गतात्युत्कटरोमराजिना नातिनिम्नोन्नतेनात्यायतेन श्रवणयुगळेनाभिविराजन्तं, नात्युन्नतया नातिदीर्घया च नासिकया सनाथं, आनलिलोलत्पद्माक्षमालापरिशोभितने ललितवनमालिलपनसुगन्धाकृष्टषट्पद-समाश्लिष्टेन पाञ्चजन्येनेव परमसुन्दरेण कन्धराबन्धेनोपेतं, आनाभिप्रालम्बिजीर्णकूर्चकलापं, अंसावलम्बितधवळयज्ञोवीतं, आजानुलोलामलमृणाळनाळकोमलभुजं, अङ्गुलिदळैरविरळैरच्छाच्छस्पाटिकाक्षघुटिकावलयमावर्तयन्तं, अनितरसुलभैरमृतमयूखांशुतुलितैरङ्गान्तराविसर्पद्भिरुत्तरङ्गैरभङ्गसङ्गैस्तेजस्स्फुलिङ्गैः परिष्कुर्वन्तमिवासन्ननभोविभागं, असकृदामोदभरात्सलयमारचितहस्तताळमध्वनि बोधयितुमिवात्मागमनामितरानम्बरचरान्, अभिनवपिशङ्गमौञ्जीपरिणद्धाधोवल्कलं, अप्रतिद्वन्द्वेनोन्निद्रसहस्रपत्रजैत्रेणाङ्घ्रिद्वयेनाभ्युपेतं, अनधिगतविग्रहाभिलाषमप्यधिगतविग्रहाभिलाषं, परित्यक्तसुदृक्संगमस्पृहमप्यपरित्यक्तसुदृक्संङ्गमस्पृहं, अविरतापेक्षिताच्युतश्रीपदमप्यविरातानपेक्षिताच्युतश्रीपदं, दूरीकृतसुरतानुरागमप्यदूरीकृतसुरतानुरागं, कदाप्यनपेक्षितवामलोचनानुकम्पमप्यनिशापेक्षितवामलोचनानुकम्पं, स्वयमधोक्षजमप्याराधिताधोक्षजं, उपदेष्टारमध्यात्मविद्यारहस्यस्य, पारं गतंसर्वशास्त्राणां, अहस्करमज्ञानान्धकारस्य, आयतनमखिलधर्माणां, अभूमिमधर्माणां, पुण्यसंचयमिव पूतव्रतानां, पुरुपार्थमिव प्रपश्यत्प्रजापूर्वार्जितकर्मणां, भगवन्तं भक्तावनात्य-

न्तमतिमन्तं, अखिललोकसंचरणशक्तिमन्तं, आश्रितजनवनवसन्तं, अधिगतसकलभुवनोदन्तं मुनिं नारदं तमश्वावानिन्द्रोऽद्राक्षीत् ॥ ११६

अम्बुजरिपुरुचिसान्द्रं मद्रः प्रेक्ष्यान्तरिक्षयोगीन्द्रम् ।
चन्द्रमिव निम्नगेन्द्रस्तुतोष सर्वाभिरञ्जनातन्द्रम् ॥ ११७

शक्रादिसर्वसुरसंस्तुतसद्गुणौघ-
सम्पूर्णमभ्रमुनिवासवमश्वभूपः ।
साकं सभाङ्गणभुवं समुपेत्य सभ्यैः
प्रत्युद्ययौ प्रणतिपूर्वमपूजयच्च ॥ ११८

नारदमनयत्स्वसभां वारिदमीशोऽथदुरितवनवह्नेः ।
शारदशीतकराभं सारदमनघस्य तत्त्वमार्गस्य ॥ ११९

अथोपविशति स्फुरन्मणिमयासने स्वर्मुनौ
परापरविदग्रगे परिजनार्पिते प्रोन्नते ।
निमज्ज्य मुदपांनिधौ प्रणिपतन् प्रभुर्मस्तके
कृताञ्जलिरुदैरयत्प्रकृतयुक्तमित्थं वचः ॥ १२०

अद्यास्माकं पौर्विकाः पुण्यभाजः
सम्यग्दीप्ताश्चाद्य नो वीतिहोत्राः ।
अद्य द्वेष्या दूरमुत्सारिता नः
प्राप्तोऽसि त्वं यन्मदीयं निकायम् ॥ १२१

चकोरश्शीतांशुं नवजलमुचं चातक इव
प्रकृष्टं त्वां दृष्ट्वा विगतपरितापोऽहमभवम् ।
इहायातं तावत्प्रजनयति शङ्कां भगवतः
प्रसादादेनां मे परिहर समावेद्य भगवन् ॥ १२२

गद्यम्—एवमतिविनयादतितरमाराद्विज्ञापयन्तं, अळिकतलकालिपताञ्जलिकंजातकलिकयोल्लसन्तं, अवनिसीमन्तिनीकान्तमवलोक्याम्बरचरमुनिवरस्तमात्मागमानन्दस्रवन्तिकान्तान्तरे नितान्तमामज्जन्तमादरादामन्त्र्यानामयं सानुनयमखिलाप्तभोज्यप्राज्यराज्यानुपद्रवतां च स्वागमनकारणमावेदयामास ॥ १२३

गद्यम्—राजन्नयमहमखिलभुवनाद्भुतावतारामनितरसुन्दरीदुर्लभाकारां अमरसभान्तराभिगीतगुणभारां निशम्य दुहितरं तवाभ्याशमागतोऽस्मि ॥ १२४

श्रुत्वा सभान्तरे तां वाचं सर्वे ननन्दुरभ्रमुनेः ।
पीत्वाऽमरा इव पुरा सुधां सुधासलिलनिधिकूले ॥ १२५

किं वा वदति मुनीन्द्रः परापरविदग्रगः पुनश्चायम् ।
इति संसदि जननिवहः परमभवन्निस्तरङ्गजलधिरिव ॥ १२६

गद्यम्—अथायमश्वावनीश्वरोऽपि मुनिवरवदनारविन्दस्यन्दमानामन्दवाङ्मरन्दबिन्दुपानानन्दतुन्दिलहृदयेन्दिरान्दिरः कञ्चनादूरे सञ्चरन्तं प्रतीहारमाहूय रे प्रभञ्जन त्वं तरसा गत्वा-

न्तःपुरं समालोक्य सावित्रीं पिता ते त्वामाह्वयति मन्मुखे-
नाम्बरमुनिवरसन्दर्शनायेत्यावेद्य तामस्मत्सकाशमधिगमयेत्या-
दिदेश ॥ १२७

गद्यम्—सोऽपि निर्गत्यादेशतस्तस्य समासाद्यान्तःपुर-
मुत्तुङ्गशिखरचुम्बिताम्बरचरेश्वरपुरं, अवलोक्य परितस्स्थितप-
रिचारिकामात्मीयशयप्रदीयमानफलचयपारितोषितभवनशुकशा-
रिकां भर्तृदारिकां व्यजिज्ञपद्राजादेशम् ॥ १२८

सा रामा सरसीरुहाहितसमस्वास्याभिरामा तदा
श्रुत्वा नारदमात्मदर्शनकृते दौवारिकादागतम् ।
तत्संदर्शनसंभ्रमात्परिधृतापर्याप्तभूषा सखी-
सन्दोहानुमता सभां निजगुरोश्चक्रे प्रयातुं मनः ॥ १२९

मातुरावेद्य तद्वृत्तं तदाज्ञां प्रतिगृह्य च ।
सा सखीवचनादासीत्सर्वालङ्कारशोभिता ॥ १३०

अथ निजपरिवारजनेनानीतां समाधिरुह्य शिबिकां द्राक् ।
प्रविवेश राजमार्गं साळिस्स्वस्त्रीव सन्मार्गम् ॥ १३१

तामापतन्तीं तटिदुज्ज्वलाङ्गीं
तारुण्यलीलारसमुद्गिरन्तीम् ।
आलोकयन्नश्वनरेन्द्रपुत्रीं
आलोचयच्चेतसि पौरलोकः ॥ १३२

एषा पुरतश्शिबिकामारूढा श्रीर्भवेदथवा ।
तन्वीमयी तटिद्वा तारा वा तरुणचन्द्ररेखा वा ॥ १.३३

कंजोद्भवकरकलिता काञ्चनपाञ्चालिकेयमसुभरिता ।
नोचेत्तत्कृततरुणीष्वीदृक् स्त्री कुत्र वीक्षिताऽस्माभिः ॥ १.३४

इति चिन्तयन् मुहुर्मुहुरखिलजनश्चित्ररचित इव तूष्णीम् ।
अभवत्समन्ततस्तच्छिबिका दृङ्मार्गमतिययौ क्षिप्रम् ॥ १.३५

सा गत्वाऽथ गुरोस्सभाङ्गणभुवं द्रागुह्यमानाज्जनैः
सद्यानाच्चतुरन्ततः परिवृतप्रान्ताऽवतीर्याळिभिः ।
पद्भ्यामेव नवप्रवाळललिताभाभ्यां प्रवाळाङ्कितां
कुर्वाणा सविधावनिं तटिदिव प्रद्योतमाना ययौ ॥ १३६

गतेनात्तव्रीडां मदकलमराळीं विदधती
युवाळीहृत्पाळिं परिधृतभयां रूपविभवतात् ।
पिशङ्गाभं सद्यस्स्वतनुमहसाऽपि प्रभुसभं
समन्ताच्चापाङ्गैः कुवलयवितानं व्यतनुत ॥ १३७

गद्यम्—तदनन्तरमरविन्दमन्दिरनन्दनस्तामरविन्दारिसुन्दरवदनां दूरादेव परिदृश्यमानामसमानशोभानिधानभूतां, अनेकवर्षधरप्रायपुरुषसमवायसमाक्रान्तसान्निधानां, अत्यद्भुतात्मतनुप्रभाभिभूताभितस्स्थितेन्द्रनीलस्तम्भद्युतितमोवितानां, इतस्ततोऽवलोकयतामवलुम्पन्तीं च दृष्टिं, अखिललोकाश्चर्याकरानितरसु-

ळभावतारां, तारामिव तारापथावतीर्णां तरुणाकारां अश्याव-
नीश्वरनन्दिनीं विधायात्मविलोचनमार्गविहारिणीं विस्मयाम्भो-
निधिविशेषनिमग्न इव स्थित्वा मुहूर्तं स्वमनस्येवमचिन्तयत् ॥

रतीशेनाज्ञप्ता रसिकजनसंमोहनकृते
तदीया माया किं नहि मृगदृगेषा यदि वधूः ।
इदं सौभाग्यं श्रीरियममलतेयं च रमणी-
मणीनां कुत्रास्ते त्रिजगति मयाऽऽलोकिततमे ॥ १३९

तटिल्लेखा नेयं यदतरळभा भाति सततं
स्फुरत्तारा नेयं स्फुरति धरणौ यत्प्रतिदिनम् ।
कनत्कल्याणाभा कनकलतिका नेयमिह यत्
पदाभ्यां प्रोन्मीलत्पयसिजनिभाभ्यां प्रचलति ॥ १४०

जाटाटीरजटाजूटवाटीवासजुगुप्सिता ।
तरुणेन्दुकला वेयं तन्वीरूपा गता भुवम् ॥ १४१

मोहिनीमाकृतिं विष्णुस्सुधां वितरितुं पुरा ।
बृन्दारकेभ्यो ह्यभजत्तत्राप्येतादृशी न भाः ॥ १४२

त्रिलोकीसाम्राज्यश्रियमनुपमात्यन्तसुषमा-
विशेषात्सावित्रीं त्रिदिवमपहाय स्वयमिमाम् ।
महेन्द्रान्मद्रेन्द्रं पितरमनुसंधाय सहसा
समायातां मन्ये सततदनुजद्वेषकलुषात् ॥ १४३

इत्थं विचार्यान्तिकमापतन्तीं
व्रती प्रपद्यापि तदीक्षणं सः ।
पुनर्नवप्रीतिकराकृतिं तां
मनो दधौ वीक्षितुमभ्रयोगी ॥ १४२

गद्यम्—तदनन्तरमनन्ततरसभाभ्यन्तरादात्मप्रान्तरमपत्वरमापतन्तीं दन्तिसीमन्तिनीमिव सलीलं, लीलानुरूपात्मरूपापहसितवियच्चरविद्याधराविषधरकन्यकारूपां, रूपानुरूपान्यप्रतीपदर्शिनीदुरापसच्चरितकलापां, अब्जासनविनिर्मितेनातिमनोहरेणाप्यशक्यामिदं स्त्रैणेन विजेतुमखिलभुवनमिख्रसमशरेण स्वमायया स्वतो निर्मितामिव भुवनमोहिनीं, स्वानुगताभिस्सौन्दर्यसौकुमार्याधरीकृतमकरकेतनमहिळाभिर्महितचरिताभिस्सखीभिरातिसङ्कटीकृतासन्नदेशां, निजालोकजिताशोकपल्लवतल्लजविभवांशुकावकुण्ठितामतीकाशप्रकाशप्रतीकां दिनान्तकान्ताम्बुदसंवीतामिव सुधामयूखरेखां, आस्तीर्णातिस्निग्धहीरफलकप्रकरपरितःपरिष्कृतां सभान्तरसर्वंसहां पदपङ्कजयोररुणिम्ना पद्मरागाङ्कितामिव परिकल्पयन्तीं, अखिलजगद्वलययुवचयाविजयोद्घोषणाय कुसुमशरविनिर्मितेन काहळीयुगळेनेव कमनीयतरात्मीयजङ्घाद्वयेन जगद्विमोहयन्तीं, तदङ्गमधिवसतः कामदेवस्य पूजोपचारानिर्वर्तनाय पुरतः परिणद्धेन रम्भास्तम्भयुगळेनेव ऊरुयुग्मेन विराजमानां, शरन्नदीपुलिनाडम्बरविडम्बिना नित-

म्बविम्बेनावर्जयन्तीमिवाखिलमपि भुवनजालं, रोमराजिलता लवालशङ्कावहमेखलाकलापपरिष्कृतेन नितम्बबिम्बावष्टम्भेनेवा· भङ्गुरेण गुरुतरपयोधरमहीधरभारोद्वहनदुःखेनेव परिक्षीयमाणेन मध्यभागेन परिस्फुरन्तीं, अन्तःपरिपूर्णावकाशतया गुरुतर पयोधरमहीधरान्तराश्रःप्रसर्पल्लावण्यरसस्रोतः प्रसर्पणप्रतिरोधकेन नाभीकूपेनाभिविराजन्तीं, अभिनवयौवनानिलकल्लोलितरागसा- गरान्तर्विहर्तुकामेन कामेन संप्लवनसौकर्याय पाणियुगळपरिधृत मिव भर्मकुम्भयुगळं कन्धरामालम्बितारहारतरळपद्मरागमणि- मालोक्यारुणोऽयमस्मत्परितोषणप्रवीण इति भ्रमेण परिसेवि- तुमागतं चक्रवाकमिथुनमिव कुचयुगळं दधानां, घनतरकुचभ- र्मभूधरप्रान्तरोद्भूताभ्यां कमनीयकार्तस्वरलताभ्यामिव मृणाळ- नाळामलकोमलाभ्यां बाहाभ्यां पश्यज्जनजातानामनिमेषतामा पादयन्तीं, अपर्युषितचन्दनाङ्गरागरूषितेन कुण्ठीकृताकुण्ठा- ब्जाभिमानेन कण्ठभागेन दृष्टिमनोहरां क्षीणः क्लीबो वा प्र- भुत्वायोग्य इत्यनवरतदुःखितेन कदाऽप्यनुपहतमण्डलतया के नाप्यनपहृतलक्ष्मीकतया च विद्योतमानमदसीयवदनेन्दु- माश्रयितुमागतेन मण्डलेनेव तारकाणामुरुतरमुक्ताकलापवल येन परिशोभितकण्ठभागां, अतिरुचिरताटङ्कप्रभाविभासि- तयोरन्तःप्रतिबिम्बितचराचरनिकुरुम्बयोः कपोलमणिदर्पणयोः प्रसर्पन्त्या प्रचुरतरप्रभाप्रवाहिन्या प्रक्षाळयन्तीमिव सभाभ्य- न्तरभागं, अविरतताम्बूलरागावलीढाभ्यामभिनवविद्रुमलतारु-

णाभ्यामधरदळाभ्यामभितः पुरतश्च किरन्तीमिव कोकनद-वितानं, अर्धोन्निद्रचम्पककलिकाप्रतिमया अत्रनिममौक्तिकस नाथया नातिदीर्घया नासिकया समानन्दयन्तीमालोकिलो-चनानि, अमृतमथनसमयसमुज्जृम्भितामितनरङ्गिणीरमणतरङ्ग-संक्षुभितफेनक्षोदधवळैरपाङ्गदर्शनैस्सर्वतस्सृजन्तीमिव क्षीरतराङ्गि-णीः, सल्लक्षणोपलक्षितोन्निद्रेक्षणारविन्दमकरन्दामन्दलोलुपतया द्विधाप्रवृत्ताभ्यामुन्मदरोलम्बराजिभ्यामिव भ्रूलताभ्यामुपशोभ-मानां, सहजातोऽपि सहजतामविगणय्य मदीयमन्दिरमवसा-दयत्यविनीतो धिगेनं दोषाकरमन्तःकळङ्किनमधिगतमनुदिनक्षयि ष्णुतां अस्य भगिनीति प्रथा ममानुचितेतीर्ष्यया किलादोष ताकळङ्कताक्षयतातिरस्कृतामृतकरस्यादसीयास्यामृतमयूखस्य स-हजभावेन परिमार्ष्टुमिव प्रथां द्विधा परिणम्य श्रीवर्णरूपेण तत्पा र्श्वोभयगतां श्रियमिव शोभमानां श्रुतियुगळीमाबिभ्रतीं, दर्शं वि-नाऽन्येषु रात्रिभागेषु दोषाकरोऽयमपहरति मदीयाडम्बरमात्मकर-निकरकशाप्रहारैः तदद्य लब्धोऽयमस्मदामित्रं ताराकळत्रइत्यदसीय माननेन्दुमवस्कान्दितुमागत्य तदूर्ध्वभागावस्थितेनान्धकारनिकरे-णेव आनीलकुटिलकुन्तलजालेनालङ्कृतां, अचिरप्रभामिवावनि-गतां, अमरवनवाटिकामिव सुमनोलोभनीयां, अरविन्दाल यामिव माधवहितविलासभूमिं, अम्बिकामनोवृत्तिमिवाविरता धिगताशिवां, भारतीमिव सन्ततसमाबद्धसत्यलोकेशभावामश्वा-वनीशतनूभवामालोकयन्नम्बरचरमुनिवरेश्वरः परमविस्मयपारा-

वारान्तरविहरमाणमानसः परमविस्मयस्तब्धकन्धरश्चिरमासां – चक्रे ॥

सविनयमुपगत्य राजपुत्री
सरसिजसम्भवसम्भवं सखीभिः ।
परतरपदयोः पयोजदर्पा-
पहरणपण्डितयोः पपात तस्य ॥ १४४

सावित्रीं सनयं समेत्य ससखीं स्वीयं पदाम्भोरुह-
द्वन्द्वं सप्रमदं प्रणम्य पितुरप्याराल्लसन्तीं मुनिः ।
दृष्ट्वाऽऽह्योपविशेति मोदभरितस्सा साळिरर्हासने
तद्वाचोपविवेश तातपुरतो व्रीडावनम्रानना ॥ १४५

तदालोकनसंभूतहर्षाब्धौ संपतन्मुनिः ।
व्यचिन्तयद्भवेत्कान्ता कस्येयं कन्यकेति सः ॥ १४६

अस्यास्सौन्दर्यसम्पन्न भवति जगतां मातुरब्जालयायाः
भारत्या भव्यमूर्त्यास्तुहिनगिरिवरेन्द्रात्मजायाः पुलोम्नः ।
पुत्र्याश्चान्याङ्गनानां किमुत विधिरिमां मेदिनीरत्नभूतां
सृष्ट्वैतद्रूपयोग्यं पुरुषमिह मुनिः कं ससर्जेति दध्यौ ॥ १४७

अथाश्वराजेन्द्रमुवाच हर्ष-
संपूरितान्तःकरणस्सुरार्षिः ।
सभास्थितानाकलयन्नवाभ्र-
नादात्मनादान्मुदितानतीव ॥ १४८

कन्यामिमां नरपते! कमनीयरूपां
कन्यामिवावनिगतां कलशार्णवस्य ।
कस्मै प्रयच्छसि महीपकुलामृताब्धि-
चन्द्राय तं कथय चक्रधराद्य तूर्णम् ॥ १४९

एतद्रूपसरूपं भूपं भूमिप्रदीपमान्विष्य ।
भूमीश! देहि तस्मै तनयां विनयान्वितां झटिति ॥ १५०

गद्यम्—इत्थमनवरतामरसन्दोहसमाराधिताङ्घ्रितामरसाभिरामेणाम्बरमुनिवरसार्वभौमेण सादरं समादिष्टस्सविनयमश्वसर्वंसहादायितसार्वभौमस्स्वयमेवं विज्ञापयामास ॥ १५१

श्रुत्वा कंचन सत्यनामकमियं सत्यात्मकं ते सुता
तं नित्यं हयभूपते कलयति स्वात्मानुरूपं पतिम् ।
एवं मामवदत्सुताप्रियसखी मत्संनिधौ स्वर्मुने
तद्राजन्यविचारणापरवशं चेतो ममोत्ताम्यति॥ १५२

गद्यम्—तद्भगवन्भक्तजनावनभव्यानुभावा सत्यवन्तमात्मकान्तमभिकाङ्क्ष्य अनया प्रत्याख्याताः प्रत्याशासमागताः पृथ्वीदयिताः, स्वामिनस्तवाखिलवेदिनो जगत्यस्ति न किञ्चिदज्ञातं, अयं सत्यवान्नाम कस्याभिजनामृताम्भोनिधिमभिवर्धयत्यात्मोदयेनाम्भोजपरिपन्थीव, कं वा देशमामोदयत्यलं कमलाकर इव, को वाऽनेन राजार्षिवंशामृतशराधिशरच्चन्द्रमाः पुरस्सरतां पुत्रवतामधिरोपितः, तद्वृत्तसमावेदनेन समाह्लादयतु मदीयमान्तरं तत्त्वं भगवान् भवान् ॥ १५३

इत्युक्त्वा विरमति मद्रभूधरेन्द्रे
प्रोवाचाम्बरचरयोगिराण्महेन्द्रः ।
तं चान्यानवनिपतीन् सभान्तरस्थान्
सोत्प्रासं सलिलदनादधीरनादः ॥ १५४

गद्यम्—भोभो भूमिपाः कथयाम्यहमुदन्तमतिविस्मय-
निशान्तं तदीयमवहितहृदयैः श्रूयतां भवद्भिः ॥ १५५

द्युमत्सेनो नाम क्षितिपतिरिहास्ते क्षितितले
सपत्नध्वान्तार्कस्स्वहितकुमुदेन्दुस्स कृतधीः ।
विधेर्योगाद्योऽयं विगतनयनस्साल्वधरणी-
वधूनेताऽरण्ये सह वसति वध्वाऽरिविजितः ॥ १५६

तस्यास्ते सत्यवान् सूनुस्सत्यात्सार्थीकृताह्वयः ।
सत्येन यस्य लोकोऽयं सत्योपेतः करिष्यते ॥ १५७

सौन्दर्येण सुमेषुं क्षमया पृथिवीं धिया गुरुं यशसा ।
शक्रं महसाऽहस्करमास्येनेन्दुं स राजते जित्वा ॥ १५८

गद्यम्—सोऽयं पित्रा चित्राश्व इति प्रथमं कृतनामा जागर्ति जगति जितामित्रतिमिरकदम्बोंऽशुमालीव, कन्दर्पदर्पमुद्बोधयिता कामिनीनां रूपसारेणापादयति रोहिणीरमण इवामर्यादं कुवलयामोदं, भिनत्ति सहजसत्त्वावष्टम्भदम्भोळिना जम्भाहित इवाश्रितात्याहितमहीध्रमण्डलानि, चण्डभानुकुलमण्डनायमानरामभूमण्डलरमण इव धर्मारण्याहिण्डमानस्स्वोद्दण्ड-

भुजदण्डमण्डितकोदण्डदण्डिताखण्डोच्चण्डदनुजमण्डलः वितराति वैतानिकक्रियाणामाविघ्नोपलम्भमारण्यकानां महामुनीनां, वाचस्पतिरिवोपयाति गुरुतां विबुधसङ्घेषु विद्यामसङ्गेषु, दाक्षायणीदयित इवाधिगच्छति राजशेखरप्रथामनन्यसुलभामात्मानुभावेन, पुण्डरीकाक्ष इव पुण्यतमेनातितरलोकान्तरप्रतीतेनात्मचरितेन प्रथयति पुरुषोत्तमतामन्यादृशेन, अम्भोजनिकेतन इवाखिलानन्दनीयेन संप्रकाशयति साधुभावेन सत्यलोकेशतां, सहस्रभानुरिव सकललोकसंतोषाकरेणाधिगतो लोकबान्धवतामन्यादृशेनाप्रतिमेनात्मतेजःप्रकाशेन,महासत्त्वाभिशोभितो विन्ध्यावनीधरकटक इव, कल्याणभाजनं कनकावनीधर इव, सुमनोलोभनीयस्सुरमहीरुह इव अनन्तगुणरत्नखानिरमृतार्णव इव, अखिलजगद्वल्लभो वर्षावारिवाह इव न शक्नोम्येनमभिवर्णयितुं, अथवा किमस्य बहुना गुणकथनेन, एवंविधोऽप्यनुपमैरसंख्यैराखिलहरिन्नितम्बिनीवदनवनजवैरिमण्डलान्यलंकृत्यानुत्तमैरात्मगुणविभूषणैरष्टादशसु वर्षेषु, समागते वत्सरेऽष्टादशाधिके विहाय विश्वंभरां विभूषयितुमिव विबुधलोकमप्युपगम्य पुरन्दरपुरस्सरैरमरैरभिनान्दितात्मसमागमः सर्वसुमनस्संतोषाय सुधर्मायामर्धासनमलंकरोति तेन सह पुरुहूतेनेत्यावेद्य तत्रैवान्तर्दधे भगवान् पैतामहः पारिकाङ्क्षी ॥ १६९

यत्कारुण्यकटाक्षलब्धकविताचातुर्यधुर्याः परं
प्रख्याताः कवयो भवन्ति भुवि वाग्गुम्भाभिसंरम्भिणः ।

चम्पूनामनि तत्कृपाविरचिते काव्ये द्वितीयश्शुभैः
सावित्रीचरितामृतैः कृतसमुल्लासो विलासोऽगमत् ॥ १६०

इत्यखण्डपाण्डित्यसमुद्दण्डपण्डितप्रकाण्डपरिमाण्डितमण्डिकलन-
गरमण्डनायमानेन, विश्वविख्यातविद्यावैदुष्यविभूषितस्य,
विश्वविश्वंभराविश्रुतविनयवेवेकादिगुणगणविराजित-
स्य असमानयामुनाभिजनतिलकायमानस्य, श्रीमतो
वेंकटरामार्यवर्यस्यान्तेवासिना तदग्रजन्मनश्श्री-
वेंकटनृसिंहाचार्यस्यात्मजेन च वरदाचा-
र्येण विरचिते सावित्रीपारि-
णये द्वितीयो विलासः



# अथ तृतीयो विलासः

---

अथ मद्रभूमिपतिरभ्रमौनिनं
पुरतस्स्फुरन्तमिव पूर्णिमाविधुम् ।
अवलोकयन्नपि जवात्तिरोहितं
समवेत्य सोऽभवदतीव विस्मितः ॥ १

विस्मितसकलानुगोऽश्वभूपः
सस्मितमात्मसुताननं समीक्ष्य ।
स स्मृतिमधिगम्य संशुशोचा-
कस्मिकनारदवाक्यविभ्रमभूताम् ॥ २

आलोच्य सोऽश्वनरपालपुरन्दरस्त-
द्योगीन्द्रवर्णिततरस्य सुतेप्सितस्य ।
श्रीसाल्वभूमिपसुतस्य समस्तवृत्तं
भीत्याब्धिमग्न इव गाढमभून्मुहूर्तम् ॥ ३

(गद्यम्—एवमतिवेलममरमुनिभाषितजातभीतिविलोलचे-
तास्सोऽश्वमहीनेता नितरामत्यारूढसत्यावनीदयितकुमारविचार-
जागरूकतोपेतः,प्रान्तरमन्देतरवृन्दारकेन्दुवदनासन्दोहसंसेव्यमा-
नारविन्दमन्दिरसुन्दरीमिथानन्यसुन्दरीसुकरानिजकरसरोजारा-

वितवीणारावभेदैरामोदयन्तीमाळीकदम्बकं, अनाशङ्कितात्मका-
न्तापद्वृत्तान्तामात्मनान्दिनीमालोक्य विस्मितमनास्तामुवाच ॥ ४

सुते ? श्रुतं किं वचनं महर्षेः
त्वयाऽखिलं सत्यवति प्रसक्तम् ।
विसृज्य तं दीनमरण्यदूनं
स्वयंवरेऽन्यं वृणु राजसूनुम् ॥ ५

क्रव्यादाहवसंकटेषु सुमनश्चक्रेशसंप्रार्थिताः
प्रत्यर्थिक्षितिपालकाद्रिदळने दम्भोळितुल्यायुधाः ।
भूमीन्द्राः कति वा न सन्ति भुवने तान्मामकीयानुगाः
संमान्याद्य समानयन्तु फलितं भूयात्त्वदालोचितम् ॥ ६

श्रुत्वा तद्वचनं पितुर्नृपसुता हित्वा सखीजल्पनं
मत्वा मौनमनर्हमित्यथ गुरुं नत्वा च धृत्वाऽञ्जलिम् ।
कृत्वा सर्वसभासदश्शुचितरापाङ्गप्रसूनोत्करैः
आकीर्णान् कलकण्ठमञ्जुलरुता स्वाभीप्सितं व्याहरत् ॥ ७

कान्तं वाक्कायकर्मादिभिरहमनघं सत्यवन्तं विभाव्य
स्वप्ने वा न स्पृहेयं सुरपतिमपि वा किं पुनर्भूपमन्यम् ।
आत्माभीष्टं पतिं या जगति कुलवधूस्संविहाय प्रपन्ना
स्यादन्यं स्वैरिणी सा भवति तदधुना मद्व्रतं न त्यजेयम् ॥ ८

कर्णाकर्णिकया स कर्णपथगस्स्वर्णाद्रिधीरो ममा-
पर्णाधीशसुपर्णवाहनसमाश्रित्तेन योऽभूद्वृतः ।

तच्चश्वच्चरणारविन्दमकरन्दास्वादने लोलुपः
तत्रैवास्ति कदाऽपि निस्सरति नो मन्मानसेन्दिन्दिरः ॥ ९

अपिच—

पुरः पश्चात्पार्श्वेऽप्यमृतरुचिवदृष्टिविषयः
स सत्येशस्सर्वेन्द्रियचयविनोदं वितनुते ।
गुरो! जाग्रत्काले शयनसमये च प्रतिमुहुः
ततश्चेतोवृत्तिर्न विचलति किं वच्मि परतः ॥ १०

यथा वा तथा वा भवत्वेवमस्मिन्
मदीयं महीपे मनस्साधु लग्नम् ।
किमेतैः प्रतीपैर्वृथावाग्विचारैः
नरेन्द्राद्य तस्मै प्रदेहि द्रुतं माम् ॥ ११

प्रयच्छसि यदि त्वं मां न तस्मै प्राणधारणम् ।
क्रियते न मया तात कुलं नङ्क्ष्यति तेऽनघम् ॥ १२

गद्यम्—एवमुक्ताभीप्सिताविचारायामश्वावनीदयिततनयायामनन्यार्हगुणगणायां अमात्यशेखरः प्रद्युम्नशेखरनामा सादरं तामवादीत् ॥ १३

गद्यम्—बालिके बालाब्जालिके भव्यतरचरितमालिके भर्तृदारिके लोकेऽस्मिन् कुतस्त्वमेतास्मिन् लुब्धाऽस्यल्पायुषि आरण्यक इव वन्योपजीविनि वर्षातपोद्वेगक्लेशितशरीरे द्विष-

दपहृतराज्यभारे शीर्षपरिष्कारीकृतजटाधारे जगतीपातिचारित्र-दूरे दूरीकृतसुखसञ्चारे दुरतिक्रमदुःखैकागारे केनाप्यदृष्टचराकारे दुर्गतोदारे द्युमत्सेनकुमारे, विदितं किल भवता नारदोदितमवितथं वचनं, अत्र जनो जगति नेच्छति खल्वमृतोपमपहाय भोज्यं भाज्यमपि विषसंस्पृष्टतया त्याज्यमुपभोक्तुं, अन्वहं पूजनीयवचनाः खलु गुरवः कुलजातेन गुणभाजनेन जनेन, तदद्याश्वावनीपुरुहूतस्यावितथोदितमवश्यं वचनमङ्गीकर्तव्यं सोदर्कं भवता भव्यानुभाववत्येति ॥ १५

गद्यम्—साऽप्याकर्ण्य तदुक्तिमतियुक्तियुक्तामाकलय्य च तमाहामात्यशेखरं प्रद्युम्नशेखरम् ॥ १८

प्राज्ञोत्तमालमाभिर्वचनचमत्कृतिभिरिह तवार्हस्य ।
तमिममपहाय सत्यव्रतमन्यं नेहतेऽद्य मम हृदयम् ॥ १६

लक्ष्मीर्नारायणं वाक्कमलभुवमुमा वामदेवं शचीन्द्रं
स्वाहाऽग्निं रोहिणीन्दुं सचिववर ! सरित्सागरं सन्मनीषा ।
ब्रह्माध्यात्मैकगम्याद्भुतमहिम यथा सत्यवन्तं तथैति
प्रज्ञा मे नान्यमिच्छत्यलमिह भवतः किं बहूक्तैर्वचोभिः ॥ १७

विलसति विधेर्नियोगे कस्तं हन्तुं समर्थतामेति ।
यद्यस्ति सुकृतशेषस्सर्वं सद्यस्समञ्जसं भवति ॥ १८

गद्यम्—इत्थमवधीर्यामात्यशेखरभाषितमश्वावनीश्वरसुता विरराम ॥ १९

आकर्ण्य तद्वचनमश्वपतिर्न तस्मात्
सत्यात्सुतां प्रतिनिवर्तयितुं शशाक ।
गङ्गां पुरः प्रचलितां शिथिलात्प्रतीरात्
रोद्धुं समुद्यत इव प्रतिभाबलेन ॥ २०

दातव्या सर्वथैषा त्वहतनिजमना साल्वराट्सूनवे द्राक्
इत्थं दैवे नियोगे सति जगति पुमान् कोऽन्यथा कर्तुमीष्टे ।
इत्यश्वेशो विचार्य स्वमनसि सविधक्ष्माधरानित्यवोचत्
कर्तव्योऽस्याः प्रयत्नः परिणयविषये जागरूकैर्भवद्भिः ॥ २१

सरसिजभवनः पुराऽवदन्मां
सरसिजलोचनयाऽनयाऽवनीश ।
तव कुलममलं भवेत्प्रदीप्तं
कलय वचो मम नो भवेन्मृषेति ॥ २२

तदिहावनीशवर्यास्तद्वचनप्रत्ययादियं तनया ।
तस्मै प्रदीयतेऽसौ भवदनुमतिपूर्वकं मया शृणुत ॥ २३

एवमभिधायासन्नमन्नतानश्वावनीरमणसंक्रन्दनस्तान-
नवरतात्मीयकार्यकरणैकधन्यान् राजन्यान्, राजसदनमभि-
गन्तुकामः प्रतीहारान् भीमनादमहानादसुनादा-
भ्रनादप्रमुखानाहूयेत्थमाज्ञापयामास ॥ २४

कन्यां सत्यवते प्रदातुमधुना दैवेन यत्नः कृतः
तस्मादद्य पुरस्थितैर्द्विजमुखैः पौरैः परं भूषितैः ।

गन्तव्यं पुरतो वनं निजवधूवर्गैस्सहागच्छति
श्वः पृथ्वीपतिरित्ययेऽत्र नगरे युष्माभिराघोष्यताम् ॥ २५

किंच—

प्राकारः परिलिप्यतां मलयजैस्सौधाग्रभागास्सितैः
बध्यन्तां घनकेतुभिर्गृहबहिर्द्वाराणि हैरण्यकैः ।
भूष्यन्तामभितोऽम्बुजैश्च कदलीस्तम्भैः पुरीदेवताः
सेव्यन्तां शुभदः प्रयाणपटहस्संताड्यतां सर्वतः ॥ २६

करिरथतुरगोष्ट्रपत्तिजाला-
कुलपुरसंस्थितवाहिनी पुरस्तात् ।
सरभसमभितोऽध्वशोधनाया-
प्रहततमायुधसंकुला प्रयातु ॥ २७

अपिच—

हिरण्यरत्नाम्बरवारपूरिताः
सरक्षकास्संप्रति यान्तु सद्रथाः ।
पर प्रयाणार्हसुपात्रसंभृताः
सुसंहतास्सच्छकटाश्च सत्वरम् ॥ २८

गद्यम्—अथाज्ञापितास्ते तेन सर्वसहादयितसार्वभौमेण प्रतीहारिणः प्रवीणाः प्रस्तुतप्रयोजनकरणेष्वप्रमत्ताश्च प्रयाताः प्रणामपूर्वकमनुज्ञाताः ॥ २९

प्राकारं गोपुराणि प्रतिपथविलसद्देवतामन्दिराणि
प्रासादान् प्रान्तरस्थान् परिजननिकरैर्भूषितान् कारयित्वा ।
देवीशुद्धान्तमेते प्रकटमरचयन् दिव्यगन्धानुलेपं
राजत्केतूच्छ्रितं च द्रुततरमवनीराण्णिदेशैकतानाः ॥ ३०

गद्यम्——ततःपरमयमश्वावनीश्वरोऽपि स्वयं समुत्थाय सिंहासनात्प्रद्युम्नशेखरदत्तहस्तः तनयया सवयस्यया सह वयस्यैश्च बहिस्सदसो विनिर्गत्य परितः पश्चात्पृथिवीपातिपारिवृतस्तूर्णमपह्नुताम्बुजावष्टम्भया दृष्ट्या प्रदर्शितप्रसादस्तान् प्रस्थाप्य पश्चात्स्वयमन्तःपुरमासाद्य सखीसन्दोहसङ्गतया अन्तःपुरमहिषीमहितया मगधमहीन्द्रात्मजया सरभसं प्रत्युद्गम्यमानः सरसिजनाभ इव सरसिजभवया, सह तया समुपविश्य सारासने नारदोदितवृत्तान्तानिवेदनपूर्वकमित्थमकथयत् ॥ ३१

नारदमुनीन्द्रकथितं साधु श्रुत्वाऽपि देवि तद्वचनम् ।
काङ्क्षति तमेव कन्या विधिना विहितं विलङ्घयेत्को वा ॥ ३२

सर्वज्ञस्स मुनिस्तथा समवदद्यस्सर्वलोकस्थितं
वृत्तं वेद करस्थितामलकवद्भूतं भविष्यत्सुधीः ।
मुग्धेयं वृणुते तमेव तनया नान्यं वरं कांक्षते
किं कर्तव्यमतवि चक्रवदहो चेतो मम भ्राम्यति ॥ ३३

कन्या विधातुर्वरसंभवेयं
स सत्ववान् सत्यवतां गरीयान् ।

मनस्तु तस्मिन् चिरसक्तमस्याः
पुमान् समर्थः क इहापनेतुम् ॥ ३४

रमासमेयं रमणि त्वदात्मजा
पुमान् स राजीवविलोचनोपमः ।
सुरर्षिवाक्यं तु महाशनेस्समं
किमत्र कर्तव्यमुदीरयानघे ॥ ३५

पुराकृतं कर्तुमिहान्यथा क्षमः
पुमान् भवेत्कस्सुभगे सुरैरपि ।
स्वतोऽनुभोक्तव्यमतः प्रिये मया
क्षमं किमद्य क्रियया निवारितुम् ॥ ३६

विरिञ्चिवचनं श्रुतं न किमरण्यसीम्नि त्वया
सुतास्तव भवन्तु साध्वभिनुताद्यमाद्देतया ।
नृपात्मभवया मनःकलुषतां वृथा मा गमः
प्रयाहि पुरमित्यहं गतभयोऽस्मि तद्गौरवात् ॥ ३७

विरिञ्चिवचनं वृथा भवति किं पुरा पौर्विकाः
विधाय मुदितं तमात्मतपसा कृतार्थाः किल ।
मया स च विधिस्त्वया परमभक्तितः पूजितः
वने तु वचनेन संमदयुतो व्यधाद्यः कृपाम् ॥ ३८

गद्यम्—तत्त्वमपि तदात्मभूप्रोक्तोक्तिगौरवेणैव गतभया भव प्रमुदितहृदया चेत्युपादिश्य तस्यै तदितरान्तःपुरजनाय

चातितरोरीकृततनयावैवाहिकयात्राप्रमोदः तत्क्षणमेव प्रभुः प्रद्यु-
म्नशेखरप्रमुखामात्यशेखरैः माळवीमुखमहनीयान्तःपुरमानिनीभि-
श्चाकलितस्वस्त्ययनः प्रथितमहिम्ना हरिशर्मनाम्ना पुरोहितेन
वैवाहिकयात्रारम्भमातन्वानः प्रयाणप्रबोधनायाखिलानां प्रया-
णसूचकवाद्यान्युद्घोषयामास ॥ ३९

कल्याणं भवति कदा नरेन्द्रपुत्र्याः
कल्याणं वितरति वा कदा नरेन्द्रः ।
कल्याणे कृतमनसामिति द्विजानां
कल्याण्यः श्रवणगताः प्रयाणभेर्यः ॥ ४०

वारिवाहनिनदभ्रमभाजः
तत्स्वने पुरविहारिमयूराः ।
नर्तनान्यकलयन् परितुष्टाः
तत्रतत्र वितताकृतबर्हाः ॥ ४१

अक्काम्ब पश्याश्वमहीन्द्रपुत्र्याः
पाणिग्रहाय प्रतियान्ति पौराः ।
यूयं किमायाथ वयं व्रजामे-
त्यासन् प्रमोदात्प्रतिवेश्म वादाः ॥ ४२

वाराङ्गना वनजवैरिसमाननाश्श्री-
भाराधरीकृतसुरप्रमदाभिमानाः ।

सौदामनीसदृशसंहननास्सगाना:
चेरुर्महीन्द्रपुरतो द्विरदेन्द्रयाना: ॥ ४३

वन्दिविदूषकमागधभटनटचेटकमुखाः प्रहृष्टमुखाः ।
परितः परिष्कृतरवास्समागतास्सैन्धवेश्वराप्तसुखाः ॥ ४४

राज्ञ्यस्तदा सरभसास्स्वसखीसमेता:
संव्यानसंवृतनिजाङ्गलताः प्रजग्मुः ।
आदेशतस्सपरिवारममन्दहर्ष-
पूरातिमग्नहृदयाः पृथिवीधवस्य ॥ ४५

गद्यम्—तत्क्षणमेव सरभससमागतैस्सपरिकरसंघातैस्स-कुटुम्बैः सर्वागमरहस्यसर्वंकषमनीषाविशेषैः सर्वशास्त्रपुराणेतिहासकोविदैस्ससमोदैश्चातिवृद्धैः पुरोहितैराचरिताशीर्वादैः, सौधान्तरद्वाराविदूरमागत्यानीतरत्नाद्युपहारैः सर्वंसहारमणसंदर्शनप्रतीक्षकैः प्रतिजनपदागतैः पृथिवीदायितसहस्रैरनुगम्यमानः, समन्तान्नातिदूरमदभ्रतरासिन्दूरबन्धुरीकृतोरुतरकुम्भस्थलैः सन्ध्यासमयसमुज्जृम्भिताम्भोधरप्रकरपरीतैः चरिष्णुभिरिव चारुतराञ्जनमहीधरशिखरैः अध्यासिताधोरणप्रवरैः परमलीलापरिचालितकरैः करटिनिकरैः समारोप्यमाणपल्याणाकल्पानल्पभासुरैरवितथखलीनवरानिगृह्यमाणकन्धरैरदीनवदनविवरासंकीर्णोद्गीर्णाडिण्डीरोद्दण्डखण्डभरैः अतिविशेषीकृतहेषानिर्घोषबधिरीकृतदिक्कोटिकराटिघटाविशङ्कटकर्णकन्दरैः खरतरखुराघातविदारि-

तवसुंधरैः अमृततरङ्गिणीरमणतरङ्गसंक्षुभितफेनपिण्डपाण्डरैः सैन्धववरैस्समधिगतसादिशेखरैः, अतित्वरितमागच्छतश्च पुरतः प्रधावतामाधृतकङ्कटानां असंभुग्नवलग्नमल्लाच्छकच्छविच्छुरिकाणां निस्तुलप्रशस्तहस्तविन्यस्तास्तोकरुचिपात्रवेत्रलताभिः अतिमात्रमुभयतः प्रचारगतामपसरापसरेति उत्सारयतां जनतामनीकेन कञ्चुकिनां, सन्ध्यासमयसमुत्तीर्णवेलार्णवोर्मिजालेनेव सरभसमुपसर्पता पदातिनिकरेण चातिसंकटप्रचारमनुगम्यमानः तत्रतत्र संबाध्यमानानामनल्पतरकल्याणसमाक्रान्तरोदोन्तराम्भोधरगर्जितभैरवैर्विरावैर्दुन्दुभीनां, अतिबलिप्रबलताडितानामप्यस्फुटितानां राणितेन पटहानां, आशीविषराट्फूत्कारपरुषवलिपुरुषास्यपृषदश्वपूरितानामलघुरवैः काहळीनां, आत्मकमनीयताधरीकृतगन्धर्वाणां दूरीकृतस्वरदोषतोषिताशेषनीतात्रिशेषाडम्बरेण शैलूषाणां, अजाण्डभाण्डमापूरयन्नागत्याश्वविश्वंभरानेता, अमरावत्यास्स्वानीकसंपत्त्या स्वराडिव वाहनगरादस्ववाहयत्काश्चित्पन्थानम् ॥ ४६

रराज राकाद्विजराजतुल्यः
महीमहेन्द्रो महसाऽतिसान्द्रः ।
तदा स्वतेजोविभवात्स्वसैन्य-
पयोधिमध्वन्यभिवर्धयन् सः ॥ ४७

तत्पालिता वर्त्मनि सर्ववाहिनी
महीपतेरग्रभुवि प्रयायिनी ।

संसत्सुराणामिव नाकगामिनी
याता सुदूरं सुखतश्शुभान्विता ॥ ४८

पथि व्रजन् पार्थिववज्रपाणिः
पत्युस्सुतायाः परिमार्गणोत्कः ।
स्वकैर्वचोभिः पथिकान् पथि प्रभुः
परं प्रहृष्टानकरोत्सहागतान् ॥ ४९

गद्यम्—एवमतीतवर्त्मा वाजिमहीश्वराट् अलघुतरसेनासंक्षोभजन्मना सर्वतः प्रसर्पता सेनान्धकारेणान्धीकुर्वन् हरिदन्तराणि, आनन्दयन्नात्मबान्धवान्, मानयन्मित्रवर्गं, प्रतिगृह्णन् प्रविदितकन्याविवाहैरध्वाभिमिलितैरवनीधवैः पुरस्कृतान्युपायनानि, अभिनमन्नध्वाभिलक्ष्यमाणान् भक्तिपूर्वमक्षीणतेजोविलक्षणान् पारिकाङ्क्षिणः, परितोषयन्नपेक्षितार्थविश्राणनेन कुक्षिंभरीन् भिक्षुकान्, सुदूरमुपगम्याम्बुनिधिवेलातमालवनमिव दर्शनमनोहरमध्वायासकर्शनोदारमवलोक्य कंचन वनोद्देशं निवेशयामास तत्रैवापारं स्कन्धावारम् ॥ ५०

गद्यम्—अथ भगवति सहस्ररोचिषि प्राचीदिगङ्गनासंगमाभिरक्तमनधिगतसान्निधानमात्मानमाधिकृत्य संजातमानां प्रतीचीपुरन्ध्रीमुपलालयितुमिव चरमगिरिशिखरोपान्तमुपसर्पति ॥ ५१

मन्दं मद्रेन्द्रपुत्रीं मलयमरुदुमारूपसौभाग्यजेत्रीं
सावित्रीं साधुगात्रीं सुरपतिसुदृशाऽप्यर्थ्यसौशील्यपात्रीम् ।

आलोक्याश्लेष्टुकामोऽप्यतिभयभरितस्संकुचन् स्प्रष्टुमेनां
आत्मार्थं प्रष्टुमश्वाक्षितिपतिमाभितस्संचचारेति मन्ये ॥ ५२

किंच—हयो मे मारङ्गस्तामियमजयद्राजिनृपजा
दृशोति प्रख्यातिर्जगति वितता सा श्रुततमा ।
मया द्रष्टव्याऽसौ क्वनु नृपतिजाऽत्रेति पृथुकः
मरुत्तामन्वेष्टुं विचरति समन्तात्किमु शनैः ॥ ५३

अपिच—मलयपवनः प्रगल्भो मद्रमहीराण्महेन्द्रपरिसरतः ।
निजगुणनिकरं नितरां चचार किं दर्शयितुकामः ॥ ५४

तदा—अध्वश्रान्तं स्वसविधगतं मद्रनाथं द्रुमौघाः
मन्दप्रेङ्खन्मलयपवनान्दोलितैस्स्वाग्रहस्तैः ।
संवर्षन्तः कुसुमनिकरं काममामोदयंस्तं
सन्तस्स्वार्थैस्स्वभवनगतान् साधु किं नार्चयन्ति ॥ ५५

सन्ध्याविकसितकुवलयमकरन्दास्वादलोलुपा मधुपाः ।
आनन्दयन्नरेन्द्रं गायन्तस्सहचरीसमाकलिताः ॥ ५६

मदकलपिकशारिकानिनादो-
सुकमाहिळाजनमाण्डितान्तराळम् ।
त्वनममरविलासिनीसमेतं
नत्रामिव वासवनन्दनं विरेजे ॥ ५७

गद्यम्—ततः क्रमेणोल्लासितप्रचारेषु सन्ध्यारम्भाडम्बरेषु,
तमस्स्तोमप्रकामाभिलिप्यमानेषु प्राचीमुखहरिन्मुखेषु, शनैश्शनै-

स्संकुचितशोभासुभगेषु सन्ध्यारागेषु, रथाङ्गविहङ्गान्तरङ्गखेद-स्मरणादिव विगतालापेषु शुकशारिकादिविहगकदम्बेषु, उत्पन्नेष्वाकाशार्णवभवमौक्तिकेष्विव सर्वतस्तारतरतारकानिकरेषु, तारकानिकरविद्रावितयाऽन्धकारपरम्परयेव निद्रया मुद्रितेष्वरविन्दबृन्देषु, अनुपमानरसभावपोषणे प्रतीपदर्शिनीस्पृहानिर्वहणालंकर्मीणे मन्दंमन्दं प्रविशत्यङ्गनारङ्गदन्तरङ्गरङ्गमरविन्दबाणे, स्वसमानशोभासंशोभिततया मन्देतरस्यन्दमानमकरन्दसन्दोहसंपूरिततया चामन्दीकृतप्रचारेष्विन्दीवरेष्विन्दिन्दिरेषु, ज्वलत्सु प्रदीपेष्विव विरहविधुरविलासिनीहृदयेषु, विस्फुरन्तीषु विद्युल्लतास्विव विशङ्कटमोषधीषु, बुभुक्षाशमनपर्युत्सुकेषु चकोरेषु, धृतोत्साहेषु दिवाभीतव्रातेषु, निष्प्रत्यूहविकासेषु प्रकटितामोदभरितेषु पांसुलाहृत्पङ्कजेषु, प्राचीदिगङ्गनावदनललाटिकायमानासमानयामिनीकामिनीकामुककरप्रकरप्रचुरतरप्रभाप्रकाशकृतावकाशे सर्वतोऽप्याकाशे— ९८

कोकद्वंद्वमगाच्छुचं कमलिनीश्रीर्दैन्यभूषट्पद-
श्रेणीगीतमपेतमन्दतिमिरैरासीज्जगद्भिस्तृतम् ।
लोकश्चाक्षुषकर्मशर्मरहितो लीनाऽभवत्कोटरे
पक्षिश्रेणिरथाप्रमत्ताविभुतामाप स्मरस्त्वोद्यमे ॥ ९९

सुधामयमरीचिरुत्कटतमोमषीसंगमात्
मलीमसमिदं जगत्करसुधारसैः क्षाळयन् ।

उदन्वदुदरान्तरादुदयभूधराग्रं गतः
व्यधाद्विगतकल्मषं तदभवत्ततो निर्मलम् ॥ ६०

पूर्वाद्रीन्द्रनितम्बे शीतांशोः प्रोत्थिते बिम्बे ।
अभवन्मध्ववलम्बे भ्रमररवः कैरवकदम्बे ॥ ६१

अमृतमथनकाले मन्दरापातकीर्णं
किमु वियति विलग्नं मण्डखण्डं पयोधेः ।
रतिपतिविहितं किं मोहयन्त्रं वधूनां
इदमिति नृपपुत्री वीक्ष्य मेने सुधांशुम् ॥ ६२

नामान्वर्थं कलयितुमिवान्यत्र देशेऽपि वेगात्
अन्तर्धानं भजति तपने तत्क्षणं सारसानाम् ।
बृन्दं सर्वं मुकुलितमभूत्स्वोदयोन्निद्रमिन्दुः
द्रष्टुं किं तद्गगनमगमद्राजपुत्रीमुखाब्जम् ॥ ६३

प्राचीरामां रमयितुमिव द्योतयन्नात्मरागं
स्वीये भर्तर्युदयशिखरिप्रान्तसंचारभाजि ।
मानाघ्राता इव विकलतां तारकास्तद्विदित्वा
तासामिन्दुर्जनयितुमिवामोदमभ्रं किमेति ॥ ६४

शुकीं वाण्या गानात्परभृतवधूं भृङ्गवनितां
अपि श्वासाज्जित्वा मलयपवनं भूपतिसुता ।
दृशा मन्मथ्यस्थं हरिणमजयन्मां मुखरुचा
स्मितेनेन्दुज्योत्स्नामिति किमभवाद्विष्णुपदभाक् ॥ ६५

कुवलयपतिरित्यहं प्रसिद्धः
कुवलयवल्लभतां धरन्नयं च ।
विलसति हयभूपतीर्विलोक्य:
तदयमतीव वियत्किमेति चन्द्रः ॥ ६६

राजाति राजानि रतिपतिरामोदभरादकारयदतीव ।
वनितान्तरङ्गरङ्गेष्वसदृशनाराचनर्तकैर्नटनम् ॥ ६७

चन्द्रज्योत्स्नाविधुततिमिराडम्बरेऽरण्यभागे
प्रद्युम्नोद्यन्मदचलहृदां चन्द्रमुख्यः पतीनाम् ।
रम्योदञ्चाद्विमलशयनप्रान्तभाजां सकाशं
मन्दं चेरुर्मनसिजशरैर्लूनमानास्तरुण्यः ॥ ६८

मलयपवनानुयायी मदनो दृढमानमानिनीसदसाम् ।
मर्माणि निर्ममन्थोत्साहं संप्राप्य मातुलमहिम्ना ॥ ६९

अमृतमयूखकान्तिविमलीकृतमद्रमहीट्-
पटगृहपाळ्यो रुरुचिरे लिखिताम्बुधराः ।
नृपदुहितुर्गुणान्निजसुताऽमितरम्यगुणान्
सममिव वीक्षितुं हिमगिरीरितपार्श्वधराः ॥ ७०

मद्रस्साल्वमहीधरसंमार्गणकौतुकी निशाकान्तम् ।
जागर्ति वीक्षमाणो यावत्तावद्गतोऽस्तनगमिन्दुः ॥ ७१

विधुबिम्बेऽस्तनितम्बे लम्बेऽहर्मुखदळदळकदम्बे ।
अभवत्सुधावलम्बे बम्भरनिनदोऽरविन्दनिकुरुम्बे ॥ ७२

प्रातःपोतवणिग्वरेण जठरमोद्भासिरव्यै लस-
त्प्राच्यै प्रेमवितीर्णमौक्तिकामिव प्राप द्युतिं काव्यभम् ।
भानुर्लोकनमस्कृतोऽयमुदये भायादिहेत्यभ्रगैः
कीर्णाः कल्पसुमोत्करा इव बभुस्तारास्तदग्रे दिवि ॥ ७३

पतिं नश्शीतांशुं विगतविभवं स्वोदयवशात्
करोत्यालोक्योऽयं न हि रविरितीवाम्बरतले ।
गतास्तारा दूरं विरळविरळा विह्वलरुचो
हसन्तीव प्राची तदनु रुरुचे तास्स्वमहसा ॥ ७४

प्राची प्राभाकरकरपरीरम्भसंरम्भशोभा
सम्भारश्रीरभवदमितामोदभूः पद्मिनी च ।
वाताश्शीता ववुरतितरस्वाधरास्वादिकान्त-
त्यक्तप्रान्ता युवतिजनताऽभूत्स्मरोद्वेगतान्ता ॥ ७५

अरुणकिरुणरागापारसिन्दूरभूमा
लसति करटदेशे व्योमतुङ्गद्विपस्य ।
स्फटिकशकलतुल्यास्तत्र तारा विरेजुः
मुकुरसदृगभूल्लौः स प्रतीचीमृगाक्ष्याः ॥ ७६

पलायनपराः परं प्रतिदिशं द्रुमेभ्यः खगा-
स्स्वनादमुखरीकृतद्रुमलतान्तरास्सत्वराः ।
महीधरमहागुहान्तरचरास्तमिस्रोत्कराः
प्रयाणकृतकौतुकास्समभवंश्च सद्योऽध्वगाः ॥ ७७

प्रचण्डमार्तण्डमृगेन्द्रपोतः
तमिस्रवेतण्डततिं कराग्रैः ।
बिभेद तन्निस्सृतरक्तधारा
विभाति नायं नवसान्ध्यरागः ॥ ७८

प्रातःपूरुषसंगमात्सुतामियं प्रासूत बालारुणं
प्राची नः परमाप्रियेति हृदयोल्लासात्पराशाङ्गनाः ।
सन्तुष्टा इव सर्वतोऽर्ककिरणश्रीकुङ्कुमाङ्काननाः
प्रत्याख्याताहिमानिकायवनिकाः प्रापुः प्रकाशं तदा ॥ ७९

प्रचण्डे चण्डांशौ गगनरणभूप्राङ्गणगते
करस्तोमाकाराः किरति शरधाराः प्रतिभटे ।
स राजा कुत्रास्ते कुवलयपतिस्तात्प्रियसखी
निशा कासीत्ताराः क्व नु हिततमास्तस्य गलिताः ॥ ८०

कोकाश्शोकभरं विसृज्य कुतुकात्कौटुम्बसंपद्युताः
घूकाः पोतयुतावनीधरगुहाव्यूहाद्बहिर्नागताः ।
लोकः पाकविरोधिदिङ्मगदगुङ्कूषायिताब्जाप्रियो-
द्भूतोद्दण्डतमोमलः शिवतमा सर्वा मही चाभवत् ॥ ८१

गद्यम्—तदनु प्रभातायां च निशीथिन्यां, अखिललोकजागरूकीकरणधुरीणारुणकिरणाडम्बरपरिमण्डिततले गगनमण्डले, कमलोदरबन्धनागारानिर्गतेषु मधुकरनिकरेषु, निलीनेषु नितरां नीलोत्पलाविजृम्भणेषु, सरभससमागतसहचरसंसर्गसं-

भूतादम्भसमुज्जृम्भमाणानन्दतरङ्गिणीतरङ्गोत्तरङ्गेषु रथाङ्गविहङ्गाङ्गनान्तरङ्गेषु, प्रत्यूषोद्बुद्धपरिशुद्धातिप्रबुद्धमुनिजनमाणवकमुखास्तोकमुखरितस्वाध्यायाध्ययननिर्दोषनिर्घोषनीरान्ध्रितेष्वाश्रमावकाशेषु, समन्ततस्समारचितसंचारेषु संयमीश्वरसंरक्षितशंबरादिसत्त्वसंघातेषु, संगृहीतगृहाक्रियारम्भसंभारेषु सर्वतस्तापससतीसन्तानेषु, अभिनवोदितप्रद्योतनद्युतिव्यतिकरात्यन्तद्योतितात्मकान्तिष्वादित्योपलव्रातेषु, महार्षिसङ्घसङ्क्रान्तास्तोकहोमधूमस्तोमेष्वाश्रमशाखिशाखादिग्विहायःप्रान्तरेषु, पूर्वोर्वीधराशिखरातिशोचिषि भगवत्यन्धकारसर्वस्वमुषि सहस्ररोचिषि, शयनादश्वावनीसंक्रन्दनः समुत्थाय यथाविधि क्रियामाणप्राभातिकक्रियाकलापः साल्वाब्धिमेखलाखण्डलपरिमार्गणकौतुकावकृष्यमाणान्तरङ्गतया सन्नद्धसूतसमानीतमाखण्डलस्यन्दनमिव अखण्डमणिप्रकाण्डमण्डितोद्दण्डध्वजदण्डमण्डनमालोककलोकलोचनानन्दनमधिरुह्य स्यन्दनं, अभितः पुरतश्च ससंभ्रमं संचरद्भिः अतिमानुषप्रमाणैर्धार्यमाणधैर्यभूषणैर्वृद्धशार्दूलचर्मनिर्मितशबलाभीलवारवाणैः अनेकविधवर्णनीयोष्णीषशीर्षैः सामर्षरूक्षच्छृङ्खलललदतिवेलश्मश्रुजालजटिलाननैः भीरुभूरिभयदनिनादैः उद्दण्डकोदण्डगुणारावविद्रावितक्षुद्रातिक्षुद्रविपिनचरश्वापदवितानैः आननविवराविसर्पदविच्छिन्नलालाक्लिन्नरसनासन्नप्रधावदुर्जयामेयसारासंख्येयसारमेयसंवृतैः शल्यकोलाच्छभल्लुलायाद्यालम्भनकल्पशल्यभल्लशूलशिलीमुखमुखोद्दीतिदद्युतिहेतिसंहतिसंधुक्षित—

शराधिदीपितस्कन्धदुर्दर्शैः अतिरभसकृतादीनकोलाहलस्वनैः अनवरतव्यायामशिक्षितमेदश्छेदलघुतरापघनैः कैश्चिन्मृगयापारीणैः महावीरपुरुषैर्द्विगुणीकृतप्रयाणोत्साहः संख्यातीतोत्तुङ्गमातङ्गतुरङ्गशताङ्गपदातिसङ्घेन कम्पयन्नटवीवसुन्धरां आत्मप्रतापप्रधूतग्रहपतिभिरारूढहारिहयहयतुलिततुरङ्गरङ्गाद्भिरात्मरथोपान्तपरिवर्तिभिस्सह कैश्चिद्वसुन्धराधिपतिभिरतीत्यातितरदूरमध्वानं आत्मानीकिनीविद्रावितप्रद्रवत्प्रस्खलत्पदश्वापदनिनादभरितोर्वीधरपर्यन्तजरीजृम्भमाणादम्भजीवाशिलाप्रतिध्वानमध्वानमजाङ्गलमन्यमसमानमधिगत्य तत्र भाक्तिपूर्वकं प्रणाममारचय्य अभिराजते कुत्र साल्वभूसंक्रन्दनाश्रम इत्यामन्त्र्याध्वादूरवासिनस्संयमिनः सहानुयायिभिस्संचरमाणः तरसा तन्मुनिवरोपदिष्टेन पथा साल्वेशाश्रमसन्निकृष्टे सन्ततसोमपीथिसंचारवरेण्ये सर्वसत्वशरण्ये धर्मारण्ये कांश्चिदवलोकयन्नाश्रमभागान् सर्वलोकालोकनोत्साहकरे कस्मिंश्चित्प्रदेशान्तरे निस्सीममहिमधामतया करिकलभकरदरपरिवीतशरीरैः केसरिकिशोरैः प्रचण्डतरपुण्डरीकमण्डलाहिण्ड्यमानैर्मृगडिम्भवितानैः कुण्डलिफणामण्डलपरिकालितताण्डवैः शिखण्डिप्रकाण्डैश्च परिमण्डिते, तत्रैवोपानिवेश्य भूरिभयादुद्वृत्तगर्वोर्वीधराडम्बरानिर्हरणवागशनीनां अतिवेलवागतीतानुभावखनीनां महामुनीनां अतिक्रान्तवर्तनीं आत्मवाहिनीं, स्वयमङ्घ्रिभ्यामेव संचरमाणः पुत्र्या सत्रा स्वपुरोधसा च शनैश्शनैः द्युमत्सेनाश्रमसन्निकाशमाससाद ॥ ८८

उपरिविवरप्रवृत्तप्रभाकराभाप्रदीपितायामम् ।
साल्वोर्वीन्द्रकुटीरं स नृपश्श्लथभुग्नकुड्यमद्राक्षीत् ॥ ८३

अभितः प्रलम्बिजीर्णाजिनमुरुवल्मीकसंकटसमीपम् ।
पुरतःप्रलम्बिनीव्रं परितः कीर्णं पिपीलिकारन्ध्रैः ॥ ८४

प्रान्तप्रस्तरफलकाप्रक्षेपितगोमयोरुपिण्डयुतम् ।
द्वारन्यस्तहसन्तीनिकटार्पितकाष्ठकूटमकवाटम् ॥ ८५

त्रुट्यत्खनित्रपिटकालयशोधिन्याश्रितोच्चलन्मञ्चम् ।
ऊर्ध्वोद्वेलत्तुम्बीरकरोटिकं विततजीर्णवेणुकटम् ॥ ८६

संभुग्नकुड्यकीलितशंकुललज्जीर्णचीरभरनिचितम् ।
छिद्रक्षुद्रप्राक्तनपत्रलवाकीर्णपरिसरोद्देशम् ॥ ८७

द्वारे तस्य कुटीरस्य तिष्ठन्तं साल्वभूपतिम् ।
प्राक्कर्मसंगताभद्रामिव रुद्रं ददर्श सः ॥ ८८

ज्ञात्वा तं दृग्विहीनं वदनशशभृतस्तेजसः कायदार्ढ्यात्
रम्यत्वादङ्गकानां घनचिकुरभराद्भव्यभावानुभावात् ।
साल्वाधीशं हयेशः कुलगुरुसहितस्सात्मजस्तत्कुटीरा-
भ्यर्णक्षोणीं प्रपन्नः प्रमुदितहृदयस्सोऽयमासीत्क्षणेन ॥ ८९

सारससदनासदृशी सा सारसदृक् स्वमीशमात्मदृशा ।
स्वप्नेक्षितं तमीक्षितुमैच्छत्प्रत्यक्षमिक्षुचापरुचम् ॥ ९०

गद्यम्—ततस्सोऽयमन्धावनीरमणोऽपि अतितरसंक्रान्तकर्णविवरेण अश्वराजन्यतनयाङ्घ्रिकञ्जमञ्जुमञ्जीराशिञ्जितेन तच्चरणविक्षेपणाविरावेण च समायान्ति स्वान्तिकं महान्तो दुरन्तमहिमनिशान्तास्तपस्स्विनोऽतिशान्ता इत्युत्थाय निस्तुलस्वमस्तकतलविन्यस्तप्रशस्तहस्तकमलकोशः प्रस्तुतमित्थमवादीत् ॥ ९१

के यूयं मुनयः प्रभो न मुनयः कस्त्वं हयोर्वीधरः
का सेयं वनिता मम प्रियसुता कोऽन्यो भवत्सन्निधौ ॥
अस्मद्गोत्रपुरोहितः कुशलिनस्त्वद्दर्शनादद्य ते
पुण्या साकमिहागमः कुत इमं त्वां द्रष्टुमासन्मिम ॥ ९२

इत्युक्तिप्रत्युक्तिप्रख्यापनविदितहयविभुस्सालवः ।
आगत्यारादभिमुखमकरोदुपचारमादरात्तस्य ॥ ९३

अथायमाश्लिष्य तमर्चयन् परं
मुदा स्वनिर्दिष्टतरे सुविष्टरे ।
सुखोपविष्टे हयविष्टपाधिपे
मुदा तदाऽपृच्छदनामयं विभुः ॥ ९४

पुरे राजन्! राज्ये किमु जनपदे शं परिजनः
किमास्ते संप्रीतः किमु शुभयुतोऽन्तःपुरजनः ।

भवन्तं सेवन्ते किमु सुमतयस्त्वत्प्रकृतयः
प्रतीपाः किं नष्टाः कथय शुभदाः किं तव गृहाः ॥ ९५

अश्वक्षोण्यमृताशनेश भवतस्स्वाधीनदेशे तपः-
प्राग्भारातपधूतपापतमसां न श्वापदोपद्रवः ।
कच्चित्संयमिभास्वतां किमु मुहुः कालप्रवर्षी परं
पर्जन्यः परितो भजन्ति किमलं सस्यानि सोल्लासताम् ॥ ९६

कुलेमद्रेशानां महितचरितानां तव जनिः
प्रतापस्त्वद्बाह्वोः सुरमनुजलोकश्रुततमः ।
मदीयालोकेच्छा कथमभवदश्वाक्षितिपते
दरिद्रालोकेच्छा स्मरहरसखस्येव भवतः ॥ ९७

आकर्ण्य तद्वचनमन्धनराधिपस्य
मद्रेश्वरोऽतिमधुरां गिरमाबभाषे ।
सर्वं त्वयोदितमिदं कुशलाभ्युपेतं
श्रोतव्यमस्ति तव यच्छृणु तद्ब्रवीमि ॥ ९८

वचनं करोषि यदि मे हस्तं हस्तेन संस्पृशेदानीं
वक्ष्ये ततस्तवाहं यत्सुखदमिहावयोः परत्रापि ।
इति वदतोऽश्वमहीभृच्छत्रमन्योर्हस्तमात्महस्तेन
पस्पर्श परममोदात्साल्वस्तं व्याजहार सोऽश्वेशः ॥

कन्यां सत्यवते प्रदातुमधुना पुत्राय ते बन्धुभिः
मित्रैर्मन्त्रिपुरोहितैस्सममहं त्वत्सन्निधानं गतः ।

एषा ह्याहितलक्षणा मम सुता श्रीसत्यवन्तं विना
नान्यं काङ्क्षति सत्कुलेन भवता तत्प्रीतिराधीयताम् ॥ ९९

श्रुत्वा नाकमुनीश्वरात्तव वने वासं तथाऽत्यद्भुतान्
त्वत्पुत्रस्य गुणांस्त्रिलोकविदितानुत्कण्ठितामात्मजां ।
आनीय प्रतिवीक्षितुं तव सुतं संप्रत्यहं त्वत्कृपां
याचेऽद्य क्रियतां मदीप्सितमिदं कारुण्यवारांनिधे ॥ १००

विधिना पुरुषस्य वा स्त्रियो वा
लिखितां फाललिपिं प्रवेत्ति कः ।
प्रकृतं पुरुषेण साधितव्यं
परमार्थप्रतिवादिना न किम् ॥ १०१

पूर्वपुण्यफलमप्ययगाधता
पुण्यकृन्निपतनं दिवो भुवि ।
अद्रिराजगरिमा वधूगुणो
मन्त्रशक्तिरपि केन वेद्यते ॥ १०२

तदहं तव सन्निकाशमेतत्प्रकृतं साधयितुं समागतोऽस्मि ।
करुणावरुणालयेन तावद्भवता संप्रति तत्समर्थनीयम् ॥ १०३

इत्थं सविनयमश्वाक्षितिपे बोधयति साल्वेशः ।
तद्वृत्तमात्मवृत्तं स्वमनस्यालोच्य तमवादीत् ॥ १०४

गद्यम्—राजन् मद्रमहीमण्डलाखण्डल! अखण्डराज्य-
लक्ष्मीविहारागारभुजाभिरामस्त्वं, असमतरसंप्रहारारिवीराप-
हृतराज्योऽहं, अखिलानन्ददमणिबृन्दतुन्दिलबृन्दारकमन्दिर-
सुन्दरसौधान्तरविहारी त्वं, अनवरतवातोत्कीर्णरेणुपूर्णजीर्ण-
पर्णकुटीरकुटुम्ब्यहं, अतोऽधिकतरमद्यावयोरुल्लसदन्तरममृतपा-
रावारात्पसरोवरयोरिव, खराकिरणखद्योतयोरिव, कुबेरकौ-
पीनिधरयोरिव, खगपतिखञ्जरीटयोरिव, कालायसकाञ्चनयो-
रिव, कथं तवैतादृशस्तनया निवत्स्यतीह निरन्तरानिखिला-
पत्प्रसवभूमीषु भूरिभीतिदध्वान्तविभावरीषु वनवसुमतीषु,
कथमेतादृशमन्नमशिष्यति नीवारमयमपरिचयनिवेशं, कथं वा
पिबत्युदकानि जीर्णपर्णसंकरकषायाणि, तस्मादननुरूपमसुखा-
वहं चास्मत्संबन्धमपहाय सर्वथाऽस्यास्सममेवान्विष्य सर्वसहास-
ह्स्राक्षकुमारं, तस्मै दीयतामेषा योषा ॥ १०५

श्रुत्वा तदीयं वचनं हयेशः
साल्वेन्द्रमित्थं पुनरप्यवोचत् ।
त्वया यदुक्तं तदयुक्तमत्र
सुखं च दुःखं च जगत्यनित्यम् ॥ १०६

सुराधीशः पूर्वं विपदुदधिमग्नस्समभवत्
स मान्धातुः पित्रा परिहृतनिजैश्वर्यविभवः ।
हरिश्चन्द्रस्तादृक्किमिह न गतस्ते श्रुतिपथं
किमेवं शुद्धात्मन् विधिविलसिते मुह्यसि मुहुः ॥ १०७

पुत्रस्ते महितश्श्रुतश्शुभगुणैर्मत्पुत्रिका तादृशी
लक्ष्मीमाधवयोरिवास्तु समयोस्सांगत्यमत्युज्ज्वलम् ।
तद्दैवेन निरङ्कुशेन घटितं का तत्र संचिन्तना
यच्चिन्त्यात्परधा जगत्युपनतं तद्दैविकं ज्ञायते ॥ १०८

काले गर्भस्थजन्तोर्विलिखति विबुधाराधितो यद्विधाता
तद्दुःखं वा सुखं वा भवति न च भवत्यन्यथेत्याप्तबुद्धिः ।
लोकस्तूष्णीं न तिष्ठत्यभिमतकलने व्याप्रियेतायतीच्छुः
सामर्थ्यात्साधितं तत्सफलमिह विना तेन दैवेन किं स्यात् ॥

सार्थं व्यर्थं भवति व्यर्थं सार्थं ध्रुवं भवत्येव ।
कर्म कृतं मरुतामपि विध्यनुकूलत्वतत्प्रतीपत्वात् ॥ ११०

गद्यम्—राजन् विश्वविश्रुतमहिमन्! विज्ञापनामिमां शृणु मामकीनामिदानीं, यूयं धनिनो वयं दुर्गता इत्यास्तामेतदुपचारवचनं, सर्वदा किं निवसति कुलाचलमालेव पुण्यस्नेहोज्ज्वलदीपिकाज्वालेवातिचञ्चला राज्यलक्ष्मीः, पश्यतु भवानेव साक्षाल्लक्ष्म्या सह संभूतस्याप्युक्षाङ्कशेखरस्य भगवतश्शशाङ्कस्य कतिपयेषु क्षीणता वासरेषु कतिपयेषु समृद्धिः, एवंविधैव धनिता दुर्गतता च, तन्नैव चिन्तनीयाऽद्य त्वया, विभावरीविभूत्याऽऽगता दीनताऽम्भोजगताऽऽदित्यज्योतिषेवाभिभूता भवति भवदीयाऽपि दुर्गतता भवत्पूर्वपुण्यादित्यज्योतिषा, तत्प्रतिगृह्णीष्वात्मसौन्दर्यनिन्दितकन्द-

पंसुन्दरीमस्मत्कुमारीमात्मरूपापहसिताङ्गजाय स्वात्मजाय सत्य-
वीरायेति ॥ ११

सत्यं वचस्तस्य निशम्य सोऽयं
विनाऽर्थनामात्मवशंवदां वधूम् ।
संचिन्तयन् संमदसागरान्तरे
संमग्नचित्तोऽभवदन्धभूपतिः ॥ ११२

साल्वेशं प्राह सप्तीशस्सत्यचन्द्रं समीक्षितुम् ।
पुत्रः कुत्रेति ते प्राप्तो मत्पुत्रीप्रीतिपात्रताम् ॥ ११३

तदनु साल्वमहीपतिरञ्जसा
प्रतिनिशम्य वचस्तदुदीरितम् ।
उटजमध्यगतं प्रियमात्मजं
निजसमीपमुपाह्वयदादरात् ॥ ११४

आहूतो निजगुरुणा निजोटजान्त-
स्सीमायास्सलिलधरान्तराच्छशीव ।
कौपीनाजिनकटिसूत्रमात्रयुक्तः
मात्रा द्रागनुनयबोधितस्समागात् ॥ ११५

मान्योदारं माननीमानचोरा-
कारं मारक्रूरनिस्त्रिंशदूरम् ।
वीरं पारावारगम्भीरमेनं
दृष्ट्वाऽतुष्यन्मद्रराण्मेरुधीरम् ॥ ११६

शान्तं स्वान्तर्विरचितरमाकान्तमग्रे स्फुरन्तम्
दान्तं प्रान्तप्रतिहततमध्वान्ततेजोविभान्तम् ।
कान्तारान्तः प्रतिदिनपरिभ्रान्तितान्तं नितान्तम्
कान्तं कञ्जाहितसममुखं प्रैक्षत प्रीतचित्तः ॥ ११७

गद्यम्—ततस्तावदश्वविश्वंभरेश्वरः पर्णकुटीराभ्यन्तरादात्मगुरुवचनगौरवादुपसर्पन्तं सत्यवन्तमवलोक्य, सामोदमहो गरीयसी खल्वनन्यसुलभानुभावधाम्नः सृष्टिप्रातिष्ठा परमेष्ठिनः, तेन मनसैव निर्मितोऽयं विभाव्य नूनं, यज्जगति न दृश्यते खल्वेतादृशं रूपवैशेष्यं, श्लाघनीया प्रीतिरस्मिन् मम पुत्रिकायाः, किं वा न लिखितमस्य कुटिलेन निटिलतले हतविधिना भाग्यं, अथवा भविष्यन्ति किमु श्रेयाँसि भूयाँसि केन विज्ञायन्ते पुरुषस्य भाग्याभाग्यायूंषि, इदमस्यानुरूपं रूपमभिरामस्य मदात्मजाभिरूप्यस्य, सर्वथा देयैवास्मै द्युतिजितद्युमणये पुत्रिका मामिकेत्यन्तर्बहुधा विचिन्त्य साल्वपुरन्दरमित्थमाचचक्षे ॥ ११८

क्षीराम्भोधिसुताऽम्बुजेक्षणमिव श्रीपार्वतीवेश्वरं
वाणी वाब्जभवं पुरन्दरमिव प्रीत्या पुलोमात्मजा ।
मान्या मत्तनया मनोहरममुं त्वत्पुत्रमाकाङ्क्षते
लक्ष्मीमाधवयोरिवायमनयोर्भूयाद्विवाहोत्सवः ॥ ११९

युतयोस्स्वत एव तयोर्गतयोरन्योन्यमित्रतां सुतयोः ।
सावित्रीसत्यवतोस्सदृशं साङ्गत्यमस्मदामोद्यम् ॥ १२०

विचार्यतामाशु विवाहकालः
शुभं च लग्नं सुतयोरिदानीम्।
शुभस्य कार्यस्य तु शीघ्रयत्नः
कर्तव्य इत्यस्ति हि लोकवादः ॥ १२१

गद्यम्—भो भूपतिसार्वभौम! याप्यते किमर्थं कालः, संप्रति समाहूयन्तामाश्रमान्तरकुटुम्बिनः पारिकाङ्क्षिणः, सम्यग्विनिश्चीयतां लग्नसमयः, संपाद्यन्तां पुरोहितैर्हरिशर्मादिभिर्वैवाहिकहोमसंभारप्राग्भाराः, प्रतिष्ठाप्यतामुटजाग्रेषु बहुपरीणाहभासुरेषु भव्यतरकायमानप्रकरः, समारभ्यन्तां गृहदेवताराधनकर्माणि, आज्ञाप्यन्तां वाद्यवादकाः, दीयतां वरनिश्चयवीटिका, क्रियतां भवताऽतिकृपया तावकशरणैककाङ्क्षिणो ममैषा मनोरथपरिपूर्तिरिति ॥ १२२

आकर्ण्याश्वपतेर्वचोऽन्धनृपतिस्संतोषभारं गुरुं
धर्तुं तद्वचनश्रुतिक्षणभवं स्थित्वाऽतिशक्तोऽपि सः ।
नेत्राभाववशादशक्त इव तत्संबन्धलाभाद्भृशं
निर्वेलाद्भुतसागरान्तरलुठत्स्वान्तः पुनर्व्याहरत् ॥ १२३

गद्यम्—राजन्! राकाराजमानराजानन! यथा रोचते भवते तथा क्रियतां, अन्धेनाहितापहृतावनीतलेन क्रियते किमेतेनातिजराजर्झरितावयवेनेति सानुनयं सप्रमोदं च साल्वावनीरमणसार्वभौमेन सम्यग्विज्ञापितो मद्रभूपतिः स्वयमेव सर्वं निर्वर्तयांचक्रे ॥ १२४

यथा पूर्वं स्वप्ने समधिगतरूपस्समभवः
तथाभूतं कान्तं तपनतुलिताभोज्ज्वलतनुम् ।
जटावन्तं कान्तं जितजलरुहस्फारनयनं
लसन्तं पश्यन्ती सपदि मुमुदे सा नृपसुता ॥ १२५

कान्तं रतीशकान्तं प्रान्ते स्वपितुस्समीक्ष्य तं भान्तम् ।
भास्वन्तामिव नितान्तं स्वान्तस्संतोषमाप सा कान्ता ॥ १२६

अटवीतटाविलसन्तं कुटिलजटाजालनिटिलान्तम् ।
कटिघटितवल्कलं सा स्फुटरूपं वीक्ष्य समतोषीत् ॥ १२७

साल्वाधीशसुतं सरोरुहसदृग्वक्त्रप्रभाभासुरं
सर्वश्लाघ्यगुणाधिकं सुरमुनिप्रख्यापितं संसदि ।
सावित्री स्वमनोवसन्तमनिशं स्वप्नेक्षितं सौख्यदं
मत्वा तद्गतभावतस्सपुलकोच्छूनाखिलाङ्गाऽभवत् ॥ १२८

सत्येश्वरस्तां सुरसुन्दरीमिव
स्वर्गाद्गतां भूतलमग्रतास्स्थताम् ।
मद्रेन्द्रपुत्रीमभिवीक्ष्य विस्मितः
स्वान्तस्स्वयं किञ्चिदचिन्तयत्तदा ॥ १२९

संकल्पजन्मनेयं संकल्पेनैव कल्पिता नूनम् ।
अम्भोजभवनरचिते स्त्रैणे यद्दृश्यते न चैतादृक् ॥ १३०

लोके यानि मनोहराण्यसमभारूढानि वस्तूनि ता-
न्यादायाम्बुजयोनिरङ्गमतनोदस्याः किमेतादृशम् ।

नो चेत्किं न भवेदिहाखिलजगन्निर्माणकर्मात्मक-
क्रीडेच्छाब्जजनिर्मिताम्बुजदृशां कस्याश्चिदङ्गं भुवि ॥ १३१

एतादृशी सहचरी भविता ममेति
संलज्जितं भवति चित्तमिदं मदीयम् ।
आलोलमुग्धनयना हरिणाङ्गनानाम्
मध्ये कथं निवसतीह वनान्तधाम्नां ॥ १३२

तन्वी तापसकन्यकापरिवृता तापाभिभूता मुहुः
तातं मातरमात्मबन्धुजनतां विस्मृत्य मामाश्रिता ।
वन्यानीह कटूनि वाञ्छति कथं भोक्तुं विसाराण्यहो
रूपस्यास्य समानभाग्यमलिखत्तन्नात्मभूर्बालिशः ॥ १३३

पुराभवे मद्रनरेन्द्रपुत्र्या
किं वा कृतं दुष्कृतमुत्पलाक्ष्या ।
प्रख्यातभाग्यान् प्रविहाय भूपान्
मामाश्रिता केन कृतं विलङ्घ्यम् ॥ १३४

सुखिनो भवन्ति केचिज्जगति जना दुःखिनः केचित् ।
तदिदं भवान्तरार्जितकर्मफलं तथ्यमिति मन्ये ॥ १३५

किं कर्तव्यमिदानीं किं फलमनयाऽद्य चिन्तया स्यान्मे ।
यदभावि न तद्भावि भयाति यद्भावि नान्यथा तदिह ॥ १३६

इति विचार्य मुहूर्तमगान्मुदं
ललितदृक्चुळकेन निपीय सः ।

सुभगभावसुधारसमश्वभू-
पतिसुताननपद्मविरोधिनः ॥ १३७

अक्षीणलक्षणाढ्यां साक्षाल्लक्ष्मीमिवागतां वीक्ष्य ।
सावित्रीं सत्येन्द्रस्स्वतपस्सिद्धिं व्यचिन्तयत्पूर्णाम् ॥ १३८

अतनोरिव सुतनुं तां सुतनुं संवीक्ष्य तत्र मुनिकन्याः ।
वन्याधिदेवतेयं धन्या नान्येति निश्चयं चक्रुः ॥ १३९

मुकुलितनयनान्तास्संबभूवुर्मुनीन्द्राः
तटितमिव विभान्तीं वीक्ष्य तां तद्वनान्ते ।
रविकरनिकुरुम्बस्फीतकंजायताक्षीं
प्रविविदुरथ योगभ्रंशसंजातलक्ष्मीम् ॥ १४०

लावण्यामृतमास्यपङ्कजरिपोः पीत्वाऽपि तस्यास्स्वकात्
सौन्दर्याद्विजितश्रियो नवनवोन्मेषं स सत्येश्वरः ।
नेत्राभ्यां पुनरप्यतृप्त इव तामापादशीर्षं मनः
चक्रे द्रष्टुमलं हयेशतनयामन्यादृशाभामिमाम् ॥ १४१

गद्यम्—अथ तामश्वविश्वंभरेश्वरसुतामापादमस्तकमवलोकयितुकामस्सत्यसोमस्स्वाकारविजितकामः, तातान्तिकोपविष्टां अवचनीयगुणरूपाभिरद्वितीयाभिरात्मवयस्याभिः किमपिकिमपि जल्पन्तीं, अन्यागोचरमभिवीक्षमाणामात्मानमनुरागपुरस्सरेणाधरीकृताम्बुजाडम्बरेणाक्षियुगळेन, मञ्जुतरगुञ्जत्पदकञ्जरञ्जदाभरणराजिरत्नांशुसंशयदायिनीभिः अतिकोमलविद्रुमपल्लवतल्लजाविस्फुरन्तीभिः अलक्तकरसपाटलिताभिः अङ्गुलीभिरुपेताभ्यां चर-

णारुणसरोरुहाभ्यामुपशोभमानां, अधिकतरश्रीरमणीयतयाऽप्यसुकरदर्शनतया च सुकरदर्शनं करभमपहसद्भिरोरुयुगळमादधानां, अनन्तमणिमहितकाञ्चीक्षेत्रतया पीताम्बरपुरस्कृततया च विष्णुपदाख्यतामुखरमम्बरमवधीरयन्तामिव मध्यदेशं बिभ्राणां, विष्णुपदजत्वतन्निवासिताभ्यां विबुधसंसेव्यत्वमासीत्सुरापगाया इतीर्ष्ययेवैतदीयमध्यापदेशं विष्णुपदाधिकतरं देशमाधिरोढुमुद्युक्तयेव यमुनया रोमराज्या विभ्राजमानां, अखिलजगद्विरुद्धमहोमात्रसंयुक्तत्वमयुक्ततरमावयोरिति निशीथिनीषु नियोगतपोऽनुष्ठानेन भगवन्तं विधुमभिराध्य एतद्वदनाभिधानविधुसन्निधौ निर्भीकतया निरन्तरमिलितेन चक्रवाकयुगलेनेव कुचयुगलेन समुद्भासमानां, कोमलत्वादिधर्मैर्मत्तकाशिनीबाहुलतातौल्येऽपि ईषन्न्यूनतापादकं तत्कल्पत्वं स्वस्याप्रतिहतमेवेति जन्मान्तरमवलम्बमानेन कल्पतरुशाखायुगलेनेव बाहुयुगलेनोद्भासमानां, लक्ष्म्या सहामृतरत्नाकरगर्भसंभूतस्य मम अतिविशुद्धतया विरागित्वेन च परमपुरुषपरिगृहीतत्वमासीदित्यहंकृतिवशाद्रागास्पदं जन्म प्राप्तवता शङ्खेनेव स्थितया सुन्दरया कन्धरयोपगतशोभां, कमनीयतरकल्याणाभरणनिक्षेपणपात्रत्वेनाक्षरश्रीमहिततमयोरनयोस्सान्निध्यमानयोर्लक्ष्मीकरामिति श्रुत्युल्लङ्घनामसहमानाभ्यामिव तदन्तमात्राविश्रान्ताभ्यां अतिविशालाभ्यां विलोचनाभ्यां विराजमानां, अविरतागमान्तस्थितिमतीमपि सद्वासनासहितामपि मां न पुरस्करोत्यतिमुग्धोऽयं मधु-

हारीत्यधरात्मकं मधुहारिणमधःकृत्य स्थितया चम्पककलिकयेव नासिकया विकासितमुखभागां, मदीयास्मितमात्रनिर्जितस्य सकलङ्कस्य दोषकरस्यास्य विष्णुपदावलम्बनेन केयं द्विजराज इति महती प्रतिष्ठेति विष्णुपदं मध्यस्थीकृत्य द्विजानपि स्वान्तर्गतान्विधाय स्थितेनेव वदनसरोरुहेण विद्योतमानां, अमानुषगण्यलावण्यपुण्यपण्यसीमां, आभिरूप्यविनिर्जितकन्दर्परामां, अश्वावनीरमणनन्दनामाभिरामामनुपदमनुस्मरन्नेव, नत्वा गुरुनिदेशेन तमश्वनरेश्वरं, पर्णशालाभ्यन्तरमाससाद ॥ १४२

आसाद्य पर्णशालाभ्यन्तरमाभिवन्द्य तत्र मातृपदे ।
ससेन्द्रस्सानन्दस्तद्वृत्तं समवदत्तस्यै ॥ १४३

सा सम्मदामृताम्बुधिमग्ना स्वोत्सङ्गमधिगमय्य सुतम् ।
शिरसि च समुपाघ्राय श्रीर्भूयादाशिषं तवेत्यकरोत् ॥ १४४

अथ मद्रनायकानिदेशधारिणः
सपुरोहितास्सचिवसत्तमाः पुनः ।
परमाह्वयन् वनानिवासिनोऽश्वभू-
पतिपुत्रिकापरिणयोत्सवं प्रति ॥ १४५

गद्यम्—ततस्साक्षतैस्सामात्यैरश्वक्षोणीशपुरोहितैः सप्रश्रयं सानुनयं चाहूतास्स्वतपोमाहिमाभिभूतपुरुहूतपुरोहिताः, संप्रत्यत्यद्भुताधरीकृतामृतघृतसूपापूपान्नभोजनमनुपमानन्दभाजनं भविष्यत्यस्माकमित्यातिसंभ्रमकलितान्योन्याह्वानाः, पारातिगपरमानन्दपारावारान्तरपरिपातितपरात्मावबोधानितान्तस्वान्ताः, सरभ-

ससंगृहीतांसावरोपितकुशचीरग्रन्थयः, शरीरधारिणस्त्रय्यर्थसारा इव, शमधनरूपपरिणताऽशान्तिरसप्रकर्षा इव, सागरा इव सन्ततानुकम्पासर्वतोमुखस्य, साधूपदेष्टारस्सर्वशास्त्राणां, आकरा इव साधुतायाः, सौधा इव सत्यज्ञानप्रपञ्चस्य, कल्पतरवः कामितफलानां, धौरेयास्सर्वाध्वराणां, स्वर्भानवस्स्मारोन्मादोद्रेकचन्द्रमसः, सहस्ररोचिषः प्रभूताज्ञानान्धकारपरम्परायाः, सन्मन्त्राः कुटिलतराशापिशाचिकानां, दावानलाश्चान्यायगहनस्य, अनुपमानुभावखनयो निर्मत्सरास्त इमे तपोधनाः परमपावनशीलाभिः स्वगृहिणीभिस्स्वहितबन्धुभिश्च सर्वालंकारसन्निवेशं साल्वपुरन्दराश्रमसकाशमासेदुः ॥ १४६

मद्रोर्वीशस्य पुत्रीपरिणयविभवं वीक्षितुं स्वाङ्गनाभिः
प्रत्युद्गम्यागतांस्तान् मुनिवरनिकरान् सानुगस्सानुमोदम् ।
नत्वा कृत्वा सपर्यां कुशलमपि समामन्त्र्य संक्षाळ्य पादान्
तत्तोयैस्स्वोत्तमाङ्गं समुमणिमकुटं प्रौक्षदुर्वीमहेन्द्रः ॥ १४७

साल्वेन्द्रस्ससुतः प्रणम्य तपसा संक्रामिताशान्तरान्
तान् सर्वान् मुनिपुंगवांश्चिरमरण्यावासबन्धूकृतान् ।
पृष्ट्वा क्षेममथाश्रमाध्वरसरोवेश्मागमान्तेवस-
द्धन्याटाजिनयोनिषु व्यरचयत्तेषां सपर्यां तराम् ॥ १४८

तदनु राजभटार्पितविष्टरा-
ण्यधिवसत्सु महर्षिषु तैर्युतम् ।

उटजमब्जभुवस्सदसा समं
समभवत्सकलोत्सवसंभृतम् ॥ १४९

हयभूपतिपरिकल्पितपरिचर्याप्रमुदितात्महृदयास्ते ।
तस्मै स्वस्त्ययनमदुः पावनशीलास्सहात्मपत्नीभिः ॥ १५०

तानूचे हयपतिरेष साल्वभूपः
मत्कन्यां स्वसुतवराय संग्रहीतुम् ।
आकाङ्क्षत्यनुमतिमद्य वस्समीहे
सर्वेषां युगपदरण्यबान्धवानाम् ॥ १५१

निशम्य तद्भूपसमीरितं वचः
महर्षयोऽपि स्वयमाबभाषिरे ।
न कस्य नन्द्यं भवतोरनिन्दितं
सुसंगतं रत्नसुवर्णयोरिव ॥ १५२

गद्यम्—तत्किमित्याश्वविश्वंभरेश्वर! विलम्बसे, कमलां कमलनाभाय कलाशम्भोधिरिवामलां बालामिमां तावकसाम्राज्यलीलामिव लीलातनुगतां सकललोकसंतोषदायकसद्गुणसौभाग्यवते सत्यवते समर्प्य अस्मानपि संप्रमोदयेति समकालमेव सर्वे संयमिनः संजजल्पुः ॥ १५३

श्रुतिचुळकयुगेन तन्मुखाब्ज-
प्रसृतवचोमधुनिर्झरीं निपीय ।
आशिषदथ वधूवरौ हयेशः
सपदि विभूषयितुं भुजङ्गवेणीः ॥ १५४

गद्यम्—तदनु प्रागेव भर्तृदारिकाप्रसाधनप्रकामप्रकलितोत्साहाः सम्प्रति सप्तिनराधिपसन्देशाद्द्विगुणीकृतसम्भ्रमदसन्दोहाः, सुन्दरतरमन्देतरवृन्दारकेन्दुमुखीसौन्दर्यस्मयनिकषायमाणानुपमानलावण्यलक्ष्मीविलासविशालशालाः, सावित्रीसाप्तपदीनसमासादितसर्वभूषासंभूषितसाधुसंहननाः, सरससम्मदागारोदारशृङ्गाररसाररहस्यसर्वस्ववहाः, तास्सद्वरारोहाः, तां वारिजलोचनां वाजिराजनन्दिनीं मञ्जुतरमञ्जीररञ्जितं किञ्चनेन्दिन्दिरामन्दतरझंकाराङ्कुरितकीरहुंकारसहकारकोकिलाहंकारारावाविरावितान्तरं लतागृहान्तरमुपनीय प्रसाधयितुमारभन्त ॥ १५५

पादालक्तकरेखा सख्याकलिता विभाति तन्वङ्ग्याः ।
सरसत्वमार्दवे तत्सहजे लब्धुं नतेव पदयुग्मे ॥ १५६

गुञ्जत्पदयुगलं तन्मञ्जीरयुगेन मञ्जुना तस्याः ।
गर्जादिव सपदि जेतुं गता तत्रत्यहंसनिकुरुम्बम् ॥ १५७

मनोजपदपीठौ तत्कुचौ काचिद्व्यभूषयत् ।
कपोलावपि कस्तूरीमकरीभिर्मृगेक्षणा ॥ १५८

कण्ठे हारं कान्तिभारोज्ज्वलन्तं
तन्व्याः काचित्तापनीयं न्यधात्प्राक् ।
नेत्रद्वंद्वं काऽपि धूताब्जदर्पं
चक्रेऽतीवाभूषितं कज्जलेन ॥ १५९

नासाग्रभागकलितं नव्यं मौक्तिकमशोभत वराङ्ग्याः ।
अभ्यसितुमागतामृतबिन्दुः किं मधुरतामधरात् ॥ १६०

चक्राकृतिकमनीये ताटङ्के ते विरेजतुस्तस्याः ।
सत्येन्द्रहृदयलक्ष्यं भेत्तुं मदनस्य चक्रयुग्ममिव ॥ १६१

सुवर्णमणिकङ्कणस्फुरिततरत्नकान्तिच्छटा-
विभासि सहजोज्ज्वलं करयुगं मृगाक्ष्यास्तदा ।
नवोदितरविस्फुरत्किरणमालिकावेल्लितं
सरोरुहयुगं यथा विलसति स्म सख्याधृतम् ॥ १६२

इत्थं सम्यग्भूषितां भूपकन्यां
वन्यावासिप्रेयसीबृन्दधन्याम् ।
वेदिं द्राग्वैवाहिकीं विश्वमान्यां
निन्युः पुण्या योषितस्तां वरेण्याम् ॥ १६३

विनयावनतं विश्वप्रार्थितं तद्वेदिकान्तरं प्रणतम् ।
साल्वोर्वीराद् स्वसुतं प्रापयदाभिपन्नमङ्गलं च हितम् ॥ १६४

रमेव रेजे सावित्री राजीवाक्ष इवाबभौ ।
सत्येशः सा सभा देवसभाकल्पा समाबभौ ॥ १६५

सभाभ्यन्तरे वेदिमभ्यर्च्य पुष्पैः
सुगन्धैः कुशैश्चाक्षतैर्लाजमिश्रैः ।
निवेश्याग्निमश्वेशितुस्सत्पुरोधाः
जजापाथ मन्त्रान् विधानाद्विधिज्ञः ॥ १६६

वधूवरौ समुपनिवेश्य पीठयोः
तयोश्शुभं ह्यनृपतेः पुरोहितः ।

करान्जयोः प्रातिसरमर्कभासुरं
बबन्ध सन्माणिमयमाग्निसान्निधौ ॥ १६७

सदा धर्माद्यर्थे माहिततनया मेऽम्बुजभव-
प्रसादात्संजाता नृवर भाविता ते सहचरी ।
गृहाणैनां पाणाविति मुदितचेताश्च स ददौ
हयेशः सत्येन्द्रोऽप्यथ स जगृहे तां प्रमुदितः ॥ १६८

राजन्! प्रजास्त्रिभुवनप्रथितास्समृद्धिं
कीर्तिं सुखानि च बहूनि भजाम्बुजाक्ष्या ।
श्रीसत्यवन्तामिति तं सुहितः कृशानुः
शंसान्निवोद्धतशिखावलयश्चकाशे ॥ १६९

देवाः कल्पलताप्रसूनकलिकापूगान् किरन्तस्तयोः
मद्राधीश्वरसाल्वभूपसुतयोरामोदमातेनिरे ।
आरब्धं गगनेऽप्सरोभिरतुलं तौर्यत्रिकं नागरैः
वादित्राण्यभिवादितान्यरचयन् विप्रास्तथैवाशिषः ॥ १७०

मुनिपत्नयस्तदा गातुं प्रवृत्ताश्शुभदाः कथाः ।
मुदा पद्माक्षनामाङ्कास्सरसाश्श्रवणोचिताः ॥ १७१

सावित्रीसत्यवन्तौ सकलमथ महायोगिवृन्दं प्रकामं
तातावन्योन्ययोगात्प्रमुदितहृदयौ मातरौ च प्रणम्य ।
अन्योन्याश्लेषवाञ्छापुलकितवपुषौ गात्रसंसर्गमात्रात्
मन्दाक्षाकुञ्चितास्यावित्र रतिमदनौ रेजतुस्तत्र कान्तौ ॥ १७२

भूरिद्रव्यं भूपतिर्भूसुरेभ्यः
भूयो भूषाहारताराम्बराणि ।
दत्त्वा दिव्यैर्भोजनैस्तोषयित्वा
सर्वान् सभ्यानर्चयामास मोदात् ॥ १७३

स्थित्वा मुदा तत्र दिनानि पञ्च
कृतोत्सवस्सर्वमहर्षिसङ्घैः ।
संतोषगोष्ठ्यां स्ववधूवराभ्यां
ददौ महार्घं हरणं महीशः ॥ १७४

गद्यम्—तदनु मद्रनरामराधिपपरिकलितसपर्यापरितुष्टमानसेषु मानसपरिनिश्चितभर्तृदारिकाभाविभवितव्यताभव्येषु भव्यतरभूसुनासीरवितीर्णभूषणभूषितात्मीयभामिनीसहचरेषु सहचरवनचरनिकरकरम्भितसामीप्येषु सामीप्यदीप्यमानान्तेवास्युपदिष्टोपनिषदर्थसारसर्वस्वसंचयेषु सर्वेषु संयमिवरेषु यथागतं गतेषु॥

संबन्धिनं साल्वमहीमहेन्द्रं
समुज्ज्वलत्सद्गुणसत्यसान्द्रम् ।
प्रीत्या समामन्त्र्य पुरं प्रयातुं
चक्रे मनोऽश्वक्षितिराणमहेन्द्रः ॥ १७६

प्रीतं बन्धुजनं प्रियानुगयुतं भूषाम्बराद्यैरलं-
कृत्य स्वात्मनि चिन्तयन् निजसुतां वार्तां च तत्प्रेयसः ।
तन्मोदाय तदाऽऽत्मसंपादितयोर्दत्त्वाऽर्धभागं हय-
क्षोणीराण्मघवा तदाश्रमतलादासीत्प्रयाणोन्मुखः ॥ १७७

गद्यम्—ततः परं सहानुयायिभिर्धर्मपत्न्या चातित्वरितप्रयाणोन्मुखमात्मानमवलोक्य बाष्पायितदृष्टियुगलां अवनतातिदीनाननां अनभिनन्दितासन्नसखीजनां अन्तराशङ्किताऽमरमुनिवरवचनां अतिविनयविरचितवन्दनां अखिलानन्दनामात्मनन्दनामभिवीक्ष्य दीर्घमुष्णं च निश्वस्य, पुत्रि सावित्रि! किमत्र क्रियतां दैवायत्तायां भवितव्यतायां, गच्छाम्यहमिदानीमितो नगरं, मा खिद्यस्व मद्गमनदुःखेन जन्मान्तरविहितं कर्मोपनयति फलं स्त्रियं वा पुरुषं वा, त्वमितः परमधिकां कुरु भक्तिं भर्तर्युपपादय सपर्यां च, मा कार्षीः प्रमादं कदाऽप्यारण्यकेषु, विशेषतो विधेहि विगतचक्षुशोश्शुश्रूषां श्वश्रूश्वशुरयोः, आराधय दैवतानि, कदाऽपि कलुषितं कलय मा मनः, इत्युपलाल्य तां शोकाकुलितामात्मतनुजातां, प्रश्रयादञ्जलीकृतकरं उदारं अमृतकरमिवाखिललोकाह्लादकरं जामातरं च बहुधा सानुनयैः सर्वामोदनीयैः सर्वशास्त्रार्थरहस्यसर्वस्वाश्रयैर्वचोनिचयैस्समाश्वास्य तेन ताभ्यां वृद्धदम्पतिभ्यामन्यैश्च तदाश्रमावसथैरासलिलमनुगम्यमानः सबलस्सपुरोहितस्सामात्यस्स्यैन्धवपतिस्सर्वसौख्यसदागारं निजनगरमाससाद ॥ १७८

यत्रावसन्नरिनृपालवराबलाद-
ग्बाष्पाम्बुवृष्टिजनका निजपौर्विकास्ताः ।
स्वीयां पुरीमनुसरन् हयभूमहेन्द्रः

तत्रात्ममन्दिरमनुत्तममाविवेश ॥ १७९

प्रस्थाप्य तातं सबलं सवाहनं
समन्त्रिवर्गं सवधूजनव्रजम् ।
धवेन युक्ताऽथ शचीव नन्दनं
प्रकाशयामास वनं नृपात्मजा ॥ १८०

सत्येन्द्रस्संगतः पत्न्या शुक्लपक्षे शशी यथा ।
रुच्या प्रतिदिनोच्छ्रायगतया रुरुचे परम् ॥ १८१

यत्कारुण्यकटाक्षपातविधुताविद्यातमोग्रन्थयः
प्रख्यातास्सुधियो भवन्ति कविताचातुर्यधुर्याः परम् ।
तद्देवीकरुणाबलाद्विरचिते काव्ये तृतीयश्शुभैः
सावित्रीचरितामृतैः कृतसमुल्लासोविलासोऽगमत् ॥ १८२

इत्यखण्डपाण्डित्यसमुद्दण्डपण्डितप्रकाण्डपरिमण्डितमण्डकल्नग-
रमण्डनायमानेन विश्वाविख्यातविद्यावैदुष्यविभूषितस्य विश्व-
विश्वंभराविश्रुतविनयविवेकादिगुणगणविराजितस्य अस-
मानयामुनाभिजनातिलकायमानस्य श्रीमतो वेङ्कटरामार्य
वर्यस्यान्तेवासिना तदग्रजन्मनः श्रीवेंकटनृसिंहार्य-
स्य आत्मजेन च वरदाचार्येण विरचिते
सावित्रीपरिणये तृतीयो विलासः.

# अथ चतुर्थो विलासः

गते ततो निजपुरमश्वभूपतौ
निजैर्गुणैर्निरुपममात्मवल्लभम् ।
दिवाकरं द्युतिरिव सर्वदाऽनुगा
ह्यनन्दयद्द्युमनृपतेस्सुता सती ॥ १

सती सावित्री सद्गुणगणयुतं सद्गुणवती
पतिं शुश्रूषुस्सा परमचरितं पापरहितम् ।
जहावश्वक्षोणीधराविरहदुःखं समाधिकं
स्त्रियः पत्युर्योगस्सकलमपि दुःखं शमयति ॥ २

आलोकैर्हरिणीव मन्दगतिभिर्हंसीव कर्णामृतैः
आलापैरसमैश्शुकीव ललितैर्नृत्तैर्मयूरीव सा ।
संगीतैर्भ्रमरीव सत्यनृपतिं संमोदयन्ती सती
सावित्री न्यवसद्यथा स्वविभुना स्वर्गे पुलोमात्मजा ॥ ३

शुश्रूषया विश्रुतवृत्तशील-
समन्वितौ सा श्वशुरौ विधाय ।
अहर्निशं हर्षपरीतचित्तौ
बभूव तत्प्रीतिसुपात्रभूता ॥ ४

अक्षीणलक्षणाढ्यौ लक्ष्मीपक्षीशवाहनौ भर्तुः।
क्षेममभिकाङ्क्षमाणा साऽनिशमाराधयत्पयोजाक्षी ॥ ५

पयोजाक्षी साऽत्मप्रियतमहिताय प्रतिदिनं
प्रभाते स्नाताऽर्काभिमुखकृतवक्त्रा स्तुतिशतम् ।
अकार्षीदारण्यव्रतयुतसतीगीतचरिता
प्रियक्षेमादन्यत्किमु जगति सत्याः प्रियतरम् ॥ ६

प्रियमपहायाश्वमहीरमणसुता चरति न क्वापि ।
क्षणमपि विहाय चन्द्रं न प्रचलति कुत्रचिज्ज्योत्स्ना ॥ ७

तप्तस्वर्णसवर्णकायलतिकां ताराधिपार्घाळिकां
प्राणेशाक्ष्यमृताञ्जनात्मघुटिकां तत्काननोद्दीपिकाम् ।
तां कारुण्यरमामिवात्ततनुकां लोलाळिनीलालकां
तन्वीं वीक्ष्य मुमोद तापसवधूवर्गो जनामोदिकाम् ॥ ८

प्रभाते सावित्री विपुलविपिनान्तःस्थितिमतां
मुनीनां तन्वाना प्रणतिमतिभक्त्या प्रतिदिनम् ।
स्वमावासं प्राप्यापचितिमतनोद्भर्तुरथ त-
पितुस्तन्मातुश्च प्रियहितधिया वत्सरमलम् ॥ ९

वृद्धास्तापसयोषितः प्रतिदिनं गत्वा सपर्यां परां
कृत्वा भूषणवस्त्रमाल्यनिचयैर्नत्वा च नुत्वा मुहुः ।
ताभिर्दीर्घसुमङ्गला भव बहून् पुत्रान् भजेत्याहिताः
सावित्री परमाशिषः प्रजगृहे भर्तुर्हितायानघाः ॥ १०

सरसिजभवनन्दनोदितं यत्
सदसि हयाधिपतेः पितुस्सभायाम् ।
वचनमवितथं विचिन्तयन्ती
विचरिषति स्म हरिप्रियाव्रतं सा ॥ ११

अथ मधुरसपरिपूरितमल्लीसुमगन्धवासिताशेषु ।
मधुमासवासरेषु व्रतचर्यार्हेषु तावदुदितेषु ॥ १२

भर्तुस्सती मृतिदिनं त्रिदिनावशेषं
मद्रात्मजा सदसि नाकमुनीरितं तत् ।
ज्ञात्वाऽपि भीतिमगमन्न रमा ममाद्य
श्रेयःप्रदा भवति नूनमिति स्मरन्ती ॥ १३

स्मर्तव्यो विपदि विभुर्हरिस्सभार्यः
सर्वेषामपि जगतामिति प्रतीतिः ।
रूढा तं जगति विना शरण्यभूतं
कोऽत्र स्यान्मम विपदब्धितारकोऽद्य ॥ १४

वसन्तश्रीकान्ते मुखरितदिगन्ते शुकपिकैः
वनान्ते सा श्रान्तव्रततिविततान्ते नृपलता ।
नितान्तं श्रीकान्ताव्रतकलनचिन्तासमुचितं
कृतस्वान्ता कान्ते त्रिदिनमुपवासं समकरोत् ॥ १५

स्थलोपवासं सलिलोपवासं
पञ्चाग्निमध्योपगतोपवासं ।

कृत्वाऽपि बाला त्रिविधोपवासं
नाजीगणद्भर्तृरता स्वकार्श्यम् ॥ १६

व्रतस्था सा पद्मापदकमलपूजां कलयितुं
प्रवृत्ता पद्माक्षः प्रथममभिराध्योऽस्त्विति तदा ।
हृदि स्मृत्वा प्राज्ञा प्रहतदुरितप्रार्थ्यचरिता
बभूव श्रीकन्तापातिपदपयोजार्चनरता ॥ १७

विरिञ्चेशानादित्रिदशपरिषत्पूजितपदं
निधायार्चारूपं निरुपममहस्सान्द्रमबला ।
मणिस्यूते पीठे मकुटकटकाहाङ्गदमुखैः
अलंकृत्याकल्पैर्मधुरिपुमथापूजयदसौ ॥ १८

भक्त्या नत्वाऽऽगमतरुशिखापल्लवीभूतपादं
पादाम्भोजप्रणतजनताकल्पितात्मप्रसादम् ।
ध्यात्वाध्यात्वा श्रितजनविपद्ध्वंसनात्तप्रमोदं
प्रास्तावीत्सा हरिमुरुदयं संप्रमार्ष्टुं स्वखेदम् ॥ १९

यन्नाभीनाळिनादजायत विधिर्यद्रोमकूपस्थिताः
शक्राद्या मरुतस्सुतो रतिपतिर्यस्याब्जमित्रे दृशौ ।
यस्य स्तोतुमनीशतामधिगता वेदास्त्वनन्तान् गुणान्
सोऽयं श्रीरमणस्तनोतु दयया भर्तुर्ममायुः स्थिरम् ॥ २०

अखण्डं ब्रह्माण्डं भवति जठरे यस्य महतो
निमेषोन्मेषास्स्युः प्रलयजगदुत्पत्तिविभवाः ।

थमाख्यातुं नालं निरवधिगुणं सर्वनिगमाः
सदाऽपायात्पायान्मम हरिरयं प्राणदयितम् ॥ २१

इति स्तुत्वा पारातिगपरहितापादकदया-
पयःपारावारं परमपुरुषं पद्मनयनम् ।
प्रकीर्याम्भोजातैः प्रकटितपराध्यञ्जलिरभूत्
प्रभूतप्राशस्त्यप्रहतदुरिता सा नृपसुता ॥ २२

स्तुत्या प्रत्यक्षभूतं हृदि निखिलजगत्सृष्टिहेतुं स्वतेजः-
प्राग्भारोद्भूतसूर्यायुतममितगुणैस्संभृतं सा प्रसन्नम् ।
शङ्खं चक्रं गदासी धनुरपि मकुटं कौस्तुभं पतिवासः
श्रीवत्सं चापि धृत्वा हृदयकमलमामोदयन्तं व्यनंसीत् ॥ २३

मुनिजनहृदयानन्दं मुकुन्दमानन्दकन्दमाराध्य ।
सा साधु तद्भुजान्तरसमुल्लसन्तीं रमामभावयत ॥ २४

कलापैः कान्तैस्तां कमलनिचयैः काञ्चनमयैः
मनस्येवाराध्याप्रहतपातिभद्रार्थिधिषणा ।
श्रियं श्रेयोदात्रीं श्रितजनविधेयां नृपसुता
प्रसन्नां प्राणंसीत्साविनयमसौ भक्तिभरिता ॥ २५

गद्यम्—इत्थमनवरताश्रितामितमङ्गलप्रदमञ्जुलतत्पदारविन्दद्वन्द्वाभिवन्दना सकलानन्दनसद्गुणसंपत्सपन्ना अश्वविश्वम्भरेश्वरनन्दना, मन्देतरवन्दारुसंदोहानन्दनां, अरविन्दमन्दिराद्यमरबृन्दाभिवन्द्यमानां चन्द्रिकाचारुतोदवासितमन्दहासितसुन्दरारविन्दारिवदनां, कुन्दकोरकरदनां, इन्दुधरसुंदरीनन्दनीयसौन्द-

र्यनिधानायमानां, इन्दीवरनयनां, इन्दिराभिधानां, अरविन्दनाभ-
हृदयेन्दिन्दिरानन्दकरदयारसमकरन्दमञ्जुलमाकन्दमञ्जरीं, अन-
वरतावनतार्तिनिर्वापणधुरीणां, पुण्यजनलभ्यामपि पुण्यजना-
लभ्यां, शम्बरारिजननभूमिमपि शम्बरजननभूमिं, सहजीकृतकम-
लासनामपि तनुजीकृतकमलासनां, आकलितकमलजावनामप्या-
कलितकमलजक्षयां, पुरस्कृतसुमनस्सन्तानामपि तिरस्कृतसुमन-
स्सन्तानां, गङ्गामिव सर्वमङ्गलालिङ्गिताशिवोत्तमाङ्गस्फुरन्तीं, अद्री-
न्द्रनन्दनामिव श्रीकन्ठोपशोभमानां, वाणीमिवाक्षररूपां, शची
मिव वृषैकगम्यां, अमरवाहिनीमिव हर्येकवशंवदां, ज्योत्स्ना
मिव स्वविलासाह्लादितविश्वम्भरां, फणिपतिफणापङ्क्तिमिवाध-
रीकृतानन्तमणिविभाविभासितपीताम्बरां, सत्कविकृतिमिव स-
रसालङ्कारां, वीणामिव सकलानुरञ्जनसद्गुणाभिरामां, राजी-
वलोचनलोचनक्रीडामनोरमारामसीमां रमामस्तावीत् ॥ २६

जय जय जगन्मातश्श्राम्यज्जगद्भयवारण-
प्रवणकरुणापाङ्गालोकप्रतोषितवल्लभे ।
श्रितजनगणश्रेयोदायै स्वभक्तभयच्छिदे
भगवति नमस्तुभ्यं देवि! प्रसीद दयां कुरु ॥ २७

कमलाक्षि कमलवासिनि! कमलाक्षामोदिनीह भव शरणम् ।
कलशाब्धिनन्दिनि! त्वां कलयेऽहं स्वीयहृत्कमले ॥ २८

यज्जातानि जगन्त्यमूनि दयया यद्रक्षितानि स्वयं
यल्लीनानि भवन्ति चाप्रतिहतप्रज्ञास्वरूपे रमे! ।

त्वामाकलयामि देवि! स हरिश्श्रीवत्सवक्षा अपि
त्वल्लीलावशगस्त्वदङ्घ्रिविलसल्लाक्षाङ्कितोरस्स्थलः ॥ २९

त्वं नित्यं रमयस्युरस्स्थितिगता येनाम्ब! पीताम्बरं
चातुर्येण कुतोऽनघे तादिदमभ्यस्तं भवत्याऽद्भुतम् ।
सन्त्यन्याः पतिदेवतास्सुमहिताः प्रागल्भ्यमेतादृशं
नेक्षे तास्वबलासु नान्यसुलभा रीतिस्तवान्यादृशी ॥ ३०

कमले! तव च सुतद्वयनाथानां कमलमेकमेवाप ।
यत्सदनबाणजन्मालयशयनत्वं तदेतदाश्चर्यम् ॥ ३१

इत्थं स्तुत्वा सद्गुणग्रामसीमां
सा रामा मां सर्वलोकाभिरामाम् ।
कान्तां शौरेः कान्तमुद्दिश्य तान्त-
स्वान्ताऽत्यर्थं स्वव्यथां वक्तुमैच्छत् ॥ ३२

इच्छन्ती तामिन्दुरुङ्मन्दहासां
भक्ताभीष्टप्रापणोद्यत्प्रयासाम् ।
विष्णोर्वक्षोरङ्गकॢप्तात्मलासां
भर्तुर्भाव्यं साऽऽचचक्षेऽब्जवासाम् ॥ ३३

मातश्शीतांशुबिम्बप्रतिनिधिलपने! त्वां प्रणम्याद्य याचे
साचीभूतं कटाक्षं कुरु मयि करुणासान्द्रमब्धेस्तनूजे! ।
मद्भर्तुस्तेन तूर्णं भवतु शुभततिर्मृत्युराशु प्रणश्यात्
विज्ञाप्यं किं मया ते मधुरिपुदयिते! कान्तवक्षोगतायाः ॥ ३४

नापन्नास्त्वां संप्रपन्ना इतीह
ख्यातिर्लोके विस्तृता विश्वमातः! ।
तां श्रुत्वा त्वां संप्रपन्ना यथाऽहं
नापन्ना स्यां त्वं तथाऽऽलोचयाद्य ॥ ३५

कमले विमले त्वत्पदकमले कलयेऽहमिह मनःकमले ।
कमलं कमलजफाले कलय त्वं कमलनयनहितलीले ॥ ३६

भजति भुवि यः पद्मां पद्मोद्भवाद्यमरस्तुतां
दिशति करुणासान्द्रा तस्येयमिष्टमिति प्रथाम् ।
जगति विततामाकर्ण्याहं तवाश्रितभद्रदं
शरणमभजं त्वत्पादाब्जं प्रदेहि ममेप्सितम् ॥ ३७

यदाश्रिताऽहं जगदम्ब! यस्मै
गुणानुरागाद्गुरुणा च दत्ता ।
यं सर्वलोकास्सततं स्तुवन्ति
तस्याद्य भद्रं वितर त्वमाशु ॥ ३८

सोऽयं यथा मदीयो भर्ता न भजेद्विपत्तिमयि देवि! ।
रचयाद्य तथाऽनुग्रहमेतस्मिन् रक्षिताश्रितसमूहम् ॥ ३९

अन्यामहं न याचे याचे त्वां याचनामेनाम् ।
रचय सफलामिमां ते जगतां जननीति संस्तुतां चाख्याम् ॥ ४०

गद्यम्—इत्थमाराचितकमलाप्रार्थनाभिवन्दना साऽश्वविश्वम्भरेश्वरनान्दिनी, सदानन्दनानूनसद्गुणसन्दोहसाम्राज्यमण्ड-

नामम्भोजनन्दिनीं आत्मवेदिभिरप्यप्राप्तसंनिधानां अरविन्द-नाभभुजाभ्यन्तरनिकेतनां तामानिर्वचनीयवात्सल्यभवनवनजलोचनवामलोचनां, अञ्जलिकालितैर्मञ्जुलतमैरवकीर्य सुमनस्तोमैः, अतुलमहीदयितायुतमणिमञ्जुलमकुटमहास्तिरस्कृतायामात्मतातान्तस्सभायां, अप्रमेयमहिमधैर्येयवाचंयमगेयनारदनामधेयादितेयमुनिवरसमीरितां वाचं स्मृत्वा निजदयितजीवितपरिमितिं च विचिन्त्य त्रिदिनावसानां, भूरितरभयभारभरिताऽप्यवमुच्य चक्षुषी चारुतररोचिषी, कलितकमलागुणकथनैकशेमुषी परित्यक्तदेहपोषाभिलाषा दूरापास्तसमस्तदोषा, क्षणमभिमतदेवताराधनेन, क्षणमनघमुनिमानिनीसेवया, क्षणमश्वत्थवन्दनेन, क्षणं वनदेवतासंभावनया, क्षणमगण्यारण्यसंचरद्धारिणतर्णकतरुणतृणप्रदानेन, क्षणमभ्यागतातिथ्यसंरम्भेण, क्षणमात्मप्रियप्रियापादनपरिश्रमेण, क्षणमनुकम्पनीयादरणीयाभिनन्दनेन, क्षणमग्निशरणालंकारकरणादिकर्मणा, क्षणमाश्रमवासिवयोवृद्धदम्पत्याभिवन्दनेन च कालमपगमयन्ती, स्मरन्ती नारदगादितदयितजीवितान्तसमयं, अम्बुजाभिमानाडम्बरहरणप्रवीणयोरश्रूण्यनन्यालोकितमपमार्जयन्ती नयनयोः, मृगीव दवदहनपरीता, कुमुदिनीव दिवसकरकरपरिपीडिता, कमलिनीव हिमोन्मेषदूषिता, सतीव दुरपवादसंस्पृष्टा, करिणीव विकटावटपरिभ्रष्टा, नाकाङ्गनेव नरादनिरादरोन्मथिता, तारेव तारापथच्युता, ग्रहगृहीतेव, शल्यकीलितहृदयेव, शापग्रस्तेव, उन्मत्तेव. दुर्वारदुरितदूषितेव,

गूढामयकालितेव, गुरुतिरस्कृतेव, गुणहीनपरिणीतेव, दुर्भरदुः-
खोपहता सावित्री त्रीणि दिनान्यतिवाहयामास ॥ ४१

अखिलनुतं व्रतमनया विरचितमञ्जालयाहितं महितम् ।
अतुलितमश्वक्षोणीदायितात्मजया समापितं तावत् ॥ ४२

महिता दुहिताऽश्वभूमिनेतुः
न च जाता तृषिता बुभुक्षिता वा ।
जनता निखिला जगन्नुतां तां
अतिपूतामभिवीक्ष्य हर्षिताऽऽसीत् ॥ ४३

कलितोत्तमव्रतान्तां कमनीयाभोज्ज्वलत्तनुलतां ताम् ।
अतिमुदिता मुनिवनिताः प्रेक्ष्य परं विस्मयोद्धरिताः ॥ ४४

पतिमृत्युभयात्पतिव्रता सा
परमार्ता कमलापदद्वयस्य ।
प्रणतार्तिभयापहस्य चक्रे
प्रणताऽर्चां दिवसे तुरीयकेऽपि ॥ ४५

कृत्वा माचरणार्चनां क्षितिपजा स्मृत्वा मृतिं स्वामिनः
ध्यात्वा चेतसि तां पयोजसदनां नत्वाऽतिभक्त्या मुहुः ।
धृत्वा धैर्यमतीव दुग्धनिधिभूर्मां श्रीर्ध्रुवं रक्षती-
त्यालोच्यालपितैस्तदाश्रमसतीस्संतोषयन्ती स्थिता ॥ ४६

पत्नीवचसा सैन्धवविश्वेशसुतां व्रतार्दितां मत्वा ।
तन्निकटं द्रुतमागात्तां भोजयितुं द्युमत्सेनः ॥ ४७

आगत्य तन्निकटमात्मसतीनियुक्तः
साल्वक्षितीशमघवा महतः प्रयासात् ।
अन्धोऽपि यष्टिमवलम्ब्य शनैस्स्नुषायाः
वाणीं सतीभिरशृणोदुपलाल्यमानाम् ॥ ४८

विजितामृतपरिपाटिं वाग्धाटीं वनतटीजटिवधूटीः ।
घटयन्तीं स्ववधूं तां साल्वमहीशोऽवदत्सुगुणपेटीम् ॥ ४९

श्रीमद्राजकुमारिकाऽसि सुभगे! त्वं नैकदाऽप्यान्विता
कष्टेन व्रतमेतदभ्युपगतं कष्टावहं किं त्वया ।
उत्तिष्ठानशनव्रतादनुचितादीनाऽद्य शोचस्यलं
श्वश्रूस्स्वीकुरु भोजनं तव धवं मां चापि सम्मानय ॥ ५०

पुत्त्रार्थं क्रियते त्वया व्रतमिदं किं? पुण्यलाभाय किं?
किं राज्यागमनाय? किं विमतविध्वंसाय? किं त्वात्पितुः ।
पुत्रार्थं? तव वल्लभस्य महते भद्राय किं? ब्रूहि मे
शीघ्रं त्वं विनिवेद्य तत्त्वमखिलं मत्संशयं वारय ॥ ५१

वनवासमसहमाना व्रतकपटात्किं जहासि निजकायम् ।
किं वा चिकीर्षितमिदं कृत्यं वत्से! भयावहं कथय ॥ ५२

गद्यम्—एवमारात्पृच्छन्तमत्यन्तकलुषितस्वान्तमन्धभूकान्तमश्वभूकान्तसुता नत्वा सभक्तयुन्मेषं प्रत्यवादीत् ॥ ५३

सार्थं यत्कलितं व्रतं तु भगवन्! लोकोत्तरं श्रेयसां
मूलं मूलविनाशनं वनसदामस्माकमद्यापदाम् ।

तन्मामद्य न रोद्धुमर्हति भवांस्त्वद्वंशभव्यार्थिनीं
नैतन्मे श्रमकृद्व्रतं मम कृते तात! प्रसीदाधुना ॥ ५४
वक्ष्याम्यहं व्रतान्ते फलमस्य भवन्तमद्य कथितं चेत् ।
व्रतविहितनियमभङ्गात्कृतमखिलं निष्फलं भवति ॥ ५५
यदि भाग्यं तव भगवन्! तावकसूनोश्च यदि भाग्यम् ।
फलति व्रतं तदैतत्पूर्वेषां श्वशुर! यदि भाग्यम् ॥ ५६
जानात्येतद्व्रतफलमहो सोऽयमम्भोजयोनिः
जानात्यव्याहततमतपाः स्वर्मुनिर्मत्पिता च ।
नान्यो वेदाखिलनुतमिदं सर्वसौभाग्यमूलं
श्वस्साल्वोर्वीदयित! भवता ज्ञास्यते तत्समग्रम् ॥ ५७

गद्यम्—इति विज्ञापयन्तीमात्मनस्स्नुषामनिवार्यसंकल्पामाकलय्य बहुमन्यमानः, वत्से! भवत्यै यथा रोचते तथाऽनुष्ठीयतामित्युक्त्वा सप्रणयमाशिषं चारचय्य स्वनिवासमाससाद ॥ ५८

सत्येश्वरस्सत्यवतां वरिष्ठः
समित्कुशापादनसंभ्रमोत्कः ।
धृत्वाऽऽश्रमान्तर्गतपुष्पपात्रं
इयेषगन्तुं विपिनान्तरालम् ॥ ५९
कठोरं कुठारं करस्थं विधाय
प्रतस्थे व्रतस्थेमवत्या सुदत्या ।
प्ररुद्धाध्वगत्याऽऽत्मपत्न्या स सत्य-
क्षितीन्द्रोऽथ भक्त्या प्रणम्यार्थितोऽभूत् ॥ ६०

त्वयोपेता नाथ! प्रसवरसलोलैरळिकुलैः
समाक्रान्तप्रान्तान् व्रततिकलितानाश्रमतरून् ।
मुनीनां कासारानधिकरुचिरानम्बुजवनैः
त्वया साकं द्रष्टुं भृशमभिलषाम्याश्रममृगान् ॥ ६१

दरीभव्यानूर्ध्वस्खलदुरुझरीन् धातुभिरलं
परीतान् प्रस्थस्थप्रचुरचमरीनुत्तमगिरीन् ।
करीन्द्रान् कान्तोरुप्रतिमकरकाण्डांश्च तदरीन्
हरीन् नारीमध्यान् स्पृहयति मनो द्रष्टुमिह मे ॥ ६२

विना मया ते विपिनप्रयाणं
अनर्हमध्यावनिभृन्महेन्द्र! ।
मदागमस्त्वच्छुभदस्ततो मे
विधेह्यनुज्ञां विपिनप्रयाणे ॥ ६३

इत्यात्मानं प्रार्थनाभिः प्रसन्नं
कुर्वाणां तां प्रेयसीं प्रेमपूर्वम् ।
चित्राश्वोऽयं चित्रचारित्रपात्रीं
तत्कालार्हां वाचमूचे व्रतार्ताम् ॥ ६४

काले ग्रीष्मगुणाकुले वनतले बालेऽभ्रगङ्गामले
लोलद्वात्रविभाविधूतचपले बालेन्दुफालोज्ज्वले ।
श्रान्ताऽतिक्षुधिता त्रिरात्रमशनाभावादशक्ताऽसि यत्
तस्मात्त्वं पदमेकमप्यधिभुवि क्षेप्तुं स्वयं नार्हसि ॥ ६५

मार्गाः कण्टकसङ्कटास्तव पदौ मल्लीमतल्लीमृदू
ग्रीष्मोऽयं निरवग्रहस्तव तनुर्मृद्वी शिरीषादपि ।
दिव्यामन्दमरन्दपूरविसरस्फारस्त्वदीयोऽधरः
कान्तारं मधुपावृतं तदधुना कान्ते! गृहे स्थीयताम् ॥ ६६

मुग्धे! त्वं न हि वेत्सि काननतलक्रौर्यं जनैर्दुस्सहं
निर्बध्नासि कुतोऽनघे! द्रुततरं प्रत्यागमिष्याम्यहम् ।
श्रान्ताऽसि व्रतचर्यया मृगशिशूनालोकमाना मुहुः
गेहे त्वं श्वशुरौ वयःपरिणतौ शुश्रूषमाणा भव ॥ ६७

गद्यम्—इत्युपलाल्याश्वराण्नन्दिनीमन्धभूपनन्दनस्तां अगण्यारण्यदौर्गुण्यमपरमपि वर्णयितुमारभत ॥ ६८

करीन्द्रमदघीङ्कृतिः क्वचिदकुण्ठकण्ठीरव-
प्रचण्डतरगर्जितं क्वचिदमन्दभीत्यावहम् ।
क्वचित्पृषतभक्षणप्रकटतीक्ष्णकोपस्फुर-
त्तरक्षुगुरुनिस्वनस्तदातिभीतिहेतुर्वनम् ॥ ६९

क्वचिद्वीरोभीमाः विकटकटुवक्त्रान्तरलस-
द्बृहद्दंष्ट्राभीलाः भ्रुकुटिकुटिला भीषणदृशः ।
चरन्ति क्रव्यादाः क्वचिदतुलभल्लूकविततिः
चरत्युद्दंष्ट्रास्या तदसुखदमारण्यगमनम् ॥ ७०

लुठन्ति भृशमेकतः पथि मुहुर्वमन्तो विषं
विकीर्णदहनोल्करैस्सहजकोपजैः फूत्कृतैः ।

सरीसृपवराः प्रिये! परमहार्यशङ्कावहाः
ततो वनमतीव ते भयदमिन्दुबिम्बानने! ॥ ७१

गद्यम्—इत्थमरण्यानिष्टकष्टाभिवर्णनेनात्मानमतिवेलमाभीषयन्तमतिनरानुरागसुभगमालोकयन्तमसकृत् रतिकान्तातिकान्तमात्मकान्तमन्यकान्तादुरापैरामोदयन्ती दूरीकृतामृतमधुरिमाभिरालापैः अश्वमहेन्द्रनन्दिनी पुनरपि शनैस्तं प्रार्थयामास ॥ ७२

अस्मिन् दिने त्वया सार्धमागन्तव्यं मयाऽनघ! ।
एतद्व्रतफलं सर्वं ज्ञायतेऽस्मिन् दिने त्वया ॥ ७३

वरमन्यमितः परं न याचे
वरदस्त्वं भव वारिजाक्ष! मेऽद्य ।
भवदीयपदाम्बुजाश्रितायाः
वनकष्टं सकलं सुखाय मे स्यात् ॥ ७४

पिता माता भ्राता महितदुहिता मञ्जुलसुतो
धनं धान्यं धन्यं गृहमपि न भर्त्रा सममिह ।
सतीनां सत्येन्दो! तदहमनघ! त्वामनुसृता
भवेयं किं ज्योत्स्ना शशिनमपहाय प्रचलति ॥ ७५

एवं विज्ञाप्य भर्तारं तदाज्ञाप्रेरिता ततः ।
विज्ञापयितुमारेभे श्वशुरावाश्रमास्थितौ ॥ ७६

पुत्रं भवतोर्यान्तं विपिनान्तं कान्तमद्य मत्कान्तम् ।
अनुगन्तुं मत्स्वान्तं काङ्क्षति याचेऽद्य भवदाज्ञाम् ॥ ७७

अनुज्ञा देया मेऽनुपमकरुणाभ्यां सकरुणं
युवाभ्यां मत्वा मां व्रतकलनखिन्नेति नितराम् ।
निरोद्धव्या नाहं विपिनगमनं मामकमिदं
प्रियेणातिश्रेयो दिशति परमस्माकमनघम् ॥ ७८

वचनं निशम्य तस्यास्सारतरं साल्वभूपतिः प्राह ।
गच्छेदानीमिति तां साध्वि समागच्छ सहदयिना ॥ ७९

अन्धावावां विकलौ नयने सत्यश्च भवतीच ।
तस्मादम्ब युवाभ्यां जीवावो न रहितौ मुहूर्तमपि ॥ ८०

इति वदन्तमनन्तदयानिधिं
श्वशुरमश्वसुतेत्यवदच्छनैः ।
सविनयं प्रणिपत्य समादिशेः
इह यथा भगवन्! क्रियते तथा ॥ ८१

इत्थं विज्ञाप्य तातं द्रुतमनुगतया सत्यवान् साधुवृत्त्या
समद्युर्वीनाथपुत्र्या सह समुपगतामोदभारोऽतिधीरः ।
सद्वल्लीसंवृताङ्गान् सकलवनचरैस्संगतानाश्रमाणां
संपश्यन् भूमिभागान् विपिनपदमभिप्रस्थितोऽभूद्विदूरम् ॥ ८२

गद्यम्—तदनन्तरमुभावपि छायांशुमालिनाविव धर्मानन्दितौ, त्रिपथगापगेशाविवान्योन्यघनरसतरङ्गितान्तरङ्गौ, इन्दिरारविन्दनाभाविवाधिगतकमलभवनौ, शचीपुरन्दराविव धिषणाभिमतगतौ, अन्योन्यरचितसल्लापकलापाभिभूतशुकशारिकाक-

लापौ तावश्वेशसुतासाल्वेशसुतौ, समागत्य सोल्लासमतिदूरं, अम्ब रान्तराविहरदमरवरवार्णिनीविनोदशय्याविलूनप्रसववितानकैः अनेकैस्तालमालतमालतकोलाङ्कोलपाटलबिल्वामलकरसालसरल - हिन्तालवकुलवञ्जुलादिकागमकदम्बकैराभूषितप्रतीरसर्वसहां, मन्दाकिनीमिवाश्रितानन्तां विबुधमुनिगणसेवितां च, रतिमिव मदनाधिष्ठितां, कात्यायिनीमिवानवरतानपेतनीलकण्ठां, अरविन्दाक्षवक्षस्स्थलीमिवाविरतकलितामोदकमलावभासितां, चतुराङ्गनामिव चञ्चच्चित्रकाननभासमानामतिपावनां यमुनामपश्यतां ॥ ८३

क्वचिद्भ्रमरसुन्दरीमधुरगीतसंनादितां
क्वचिद्धवळहंसिकाविततपक्षविक्षोभिताम् ।
क्वचिच्छफरसंहतिप्रचलितारविन्दोज्ज्वलां
विलोक्य तरणेस्सुतां मुदमवापतुर्दंपती ॥ ८४

क्वचित्पतगमण्डलीपरिगतां क्वचिच्छैवल-
प्रपञ्चपरिशोभितां क्वचिदमन्दफेनान्विताम् ।
क्वचित्कुमुदिनीयुतां क्वचिदगाधतोयोद्धतां
विलोक्य तरणेस्सुतां मुदवापतुर्दंपती ॥ ८५

चक्रस्तनीमब्जदृशं सुनील-
वेणीं महावर्तमनोज्ञनाभिम् ।
साधूज्ज्वलत्सैकतसन्नितम्बां
श्यामामिवालोक्य ननन्दतुस्तौ ॥ ८६

शमनावरजां दृष्ट्वा तुष्टाव सती नितान्तपरितुष्टा ।
विषधरविषस्य शमनीं लतिकां दृष्ट्वेव सर्पसंदष्टा ॥ ८७

जय जय भगवति यमुने! जय रक्षितसकलसत्वसन्ताने! ।
जय सकलपापशमने! जय कृतगङ्गाप्रवाहसंगमने! ॥ ८८

विबुधोत्तमसेव्याऽऽसीद्विष्णुपदप्रोद्भवा हि सा गङ्गा ।
तन्नयनादुद्भूतामधिकां तस्या विभावये भवतीम् ॥ ८९

कृतान्तभगिनि! प्रियं रचयितास्मि ते पूजनं
प्रियेण सह संगता यदि विशेयमात्मोटजम् ।
तदा परमभासुराम्बरसुराहरिद्राक्षत-
प्रसूनवरकुङ्कुमाभरणपक्वमांसौदनैः ॥ ९०

मातस्त्वं मधुराम्बुपूरभरिते! त्वां सेवमानामिमां
प्रेम्णाऽऽलोकय लोकबन्धुतनये! लोकैकपूज्येऽद्य माम् ।
त्वत्सेवानिरतात्मनां तनुभृतां सन्तापमुच्छिद्य यत्
सत्कारुण्यनिभैर्ददासि सलिलैस्त्वं भुक्तिमुक्ती द्रुतम् ॥ ९१

इति स्तुत्वा देवीं सुभगसलिलां तां सुरुचिरां
समीपे सम्भूतैर्मधुरमधुरैस्सारसरुतैः ।
तयाऽऽश्वस्तेवागात्प्रियतमयुता किंशुकवनीं
अदूरस्थां तस्याः कलितसुकृता सा नृपसुता ॥ ९२

गद्यम्—सत्यवानपि देवार्चनोचितैरतिललितैस्तत्रत्यत त्तल्लतापचितैः प्रसूनजातैरापूरितं प्रसूनभाजनमगमशाखावलम्बि- नमारचय्य सामिद्धितानं संपादयितुमारभत ॥ ९३

परशुं करपल्लवेन धृत्वा
समिधश्छेत्तुमसौ समुद्यतोऽभूत्।
सपदि श्रमसंगतस्य तस्य
प्रबला मार्धनि यातना तदाऽऽसीत् ॥ ९४

प्रचण्डपवनोद्गमप्रकटितस्फुलिङ्गस्फुर-
त्कृशानुपरिवेष्टितद्रुम इवायमासीत्ततः ।
गताऽस्य वदने प्रभा विगलितं शरीरे बलं
बभूव कलुषं मनः क्षुभितमक्षजातं शनैः ॥ ९५

परशुं प्रविहाय सोऽतिवेगात्
उपगम्य प्रियवल्लभासकाशम् ।
परिरभ्य च तां भुजद्वयेन
प्रचुरं दुःखमुपाश्रितो व्यलापीत् ॥ ९६

गद्यम्—हा प्रिये प्रेमपात्रि! हा मनोहरगात्रि! हा हय-नरेन्द्रपुत्रि! हा सावित्रीत्यतिदैन्योन्मुक्तार्तनादः निरर्गलानिस्सरन्निश्श्वासनिबिडितवदनः किञ्चिदुद्घाटितबाष्पाविललोचनोऽतिशोचन्, पारातिगपरितापाभिभूतोऽस्मि, अहो दुरतिक्रमः कालपरिपाकः, किं मया पूर्वजन्मन्यनुष्ठितं कर्म दूरीकृतनर्ममर्म, किमिदमापातितमतिकष्टं, हा दग्धोऽस्म्यविज्ञातागतेन आपदाश्रयाशेन, हा च्छिन्नोस्म्यतिसंकटकरवालेन, हा भगवन् द्युमत्सेन गुरो, हा पुत्रवत्सल, न वेत्सीदानीमात्मजन्मानमतिकष्टां

दशामापन्नं, अहो दुर्निवारमंहःप्राचुर्यमनुभवैकपरिहार्यं, अम्ब हा निरर्थकस्त्वया धर्मो भद्रार्थमाचरितः, हा प्राणप्रिये! त्वया कृतं व्रतमासीदनर्थकं, अनाथाऽस्यद्य, गते मयि समवर्तिसन्निधिं कथमेकाकिनी जीविष्यासि, कं याचसे शरणं, अन्धोऽस्मीदानीं, उत्सन्नान्यासन्निन्द्रियाणि, शून्या दिशः, संप्रत्यनधिगतार्थमासीत्कृतमारण्यकव्रतं, संप्रत्यूर्ध्वप्रयाणोन्मुख इव मे हृदयात्प्राणवायुः, देहि मे राकेन्दुबिम्बानने! निन्दितचन्दनसुधाबिन्दुसेचनं प्रविलपतो मे प्रतिवचनं, अम्बुजाभिमानाडम्बरतस्करेण संस्पृश पाणिना मां, प्रसार्यतामुत्तमाङ्गावलम्बाय मङ्गलप्रदसङ्गस्त्वदुत्सङ्गः, चरमो ममायं त्वदुत्सङ्गसङ्ग इति विलप्य बहुधा निमील्य चक्षुषी, अधोऽक्षजे विक्षिपन् प्रेक्षां विरराम ॥ ९७

गद्यम्—तदनु तमश्वमहीदायितसुता, उपशान्तमिव कृशानुं अधःपतितमिव पुण्यसंक्षयात्पुण्यकृतं, अकालशुष्कमिव महासरोवरं, अस्तं गतमिव सवितारं, अपगतनिश्श्वासप्रचारमात्मभर्तारं अवलोक्य बाष्पाकुलितनयना बहुभयात्स्मरन्ती स्वर्मुनिवचनमात्मवल्लभविपत्संसूचनं, अपरिमितपरितापाभिभूता, करिणीव यूथपविनाकृता, हंसीव सहचरविरहिता, मृगीव मृगयुहतदयिता, वासरलक्ष्मीरिव दिनान्तदूषिता, दिशो दश विलोकयन्ती, नाहमुत्सहे जीवितुमेतेन विना क्षणमपि, किमनेन जीवितेनापि, किं मात्रा, किं पित्रा, किं श्वशुरेण, किं वा

भूषणैः, किमितरैश्च, परित्यजामि पापिनः प्राणान् परिसरतोऽस्यैवेति निपत्य धात्र्यां, निकृत्ता लतेव, निर्गतसंपदिव नितरामपवाददूषितेव, भूताविष्टेव भग्नावयवेव विषदिग्धहृदयेव, ग्रहग्रस्तेव, गृहोद्वासितेव, मुक्तमूर्धजा परितः परिलुठन्ती पुनरुत्थाय भक्तिभरिता मृणाळनाळमृदुलमुपवर्हीकृत्यात्माङ्कतलं प्रियोत्तमाङ्गस्य. दुःखाम्बुधिनिर्मग्ना सोरस्ताडनं भृशमरोदीत् ॥ ९८

अथ हरीन्द्रसुताऽमितदीनतां
परिगता परिरभ्य पतिं व्यसुम् ।
पुरुषमप्रतिमं पुरतः स्थितं
स्वयमपश्यदद्दष्टचरं तदा ॥ ९९

कालाम्भोवाहकायं कमलसदृशदृक्पाणिपादं विराजत्-
केयूरोदारहारं मणिकटकाकिरीटाढ्यमद्रीशधीरम् ।
राजद्यज्ञोपवीतं धृतदृढकवचं दिव्यमव्याजवेषं
पद्माक्षी पाशहस्तं भयदमतितरां वीक्षमाणा बिभाय ॥ १००

गद्यम्—एवमात्मीयपातिव्रत्यमाहात्म्यादात्माभिमुखमागतं, सप्तार्चिषमिव सर्वतस्संप्रसृततेजस्स्फुलिङ्गं, विश्वविलक्षणविविधलक्षणोपलक्षितभयानकविग्रहं, अतिप्रचण्डमार्तण्डमण्डलोद्दण्डवदनमण्डलपरिस्फुरच्छ्मश्रुजालविराजमानं, दन्दशूकेन्द्रभोग दिर्घसुभगाभ्यां बाहुदण्डाभ्यामुपशोभमानं, दुर्गताद्रिजामिव सर्वदाऽधिगतदाक्षिणाशं, कन्दर्पमिव कमलासनन्दनं, नन्दनन्दनमिव नरकनियमनकारिणं योगमार्गमिव भवविरोधिनं, मृगयुमिवात्मी-

यमहिमावार्जितरौरवसंघातं पुरुषं अप्रमेयगुणसमवायवरुणालय-मवलोक्य सानुतापं सहसोपनिवेश्य भूमौ स्वीयोत्सङ्गात्प्रि-योत्तमाङ्गं, भूरिभयभारकम्पितगात्री सावित्री सविनयं शनै-श्शनैस्तमाचचक्षे ॥ १०१

कस्त्वं? श्रीमन्! कथय कमलाकामिनीकामुकः किं?
किं तन्नाभीनलिनसदनश्शारदाप्राणनाथः? ।
किं गौरीशः? किमु सुरपतिः? किं दिनेशः? किमिन्दुः?
किं काळिन्दीं स्वाहितभगिनीं द्रष्टुमेतः कृतान्तः? ॥ १०२

नेन्द्रं त्वां देव! मन्ये यदिह दशशती लोचनानां न दृष्टा
नापि त्वं वासरेशो यदिह तनुरियं भाति नीलोत्पलाभा ।
को वा लोकाधिनाथः कुत इह चलितः कुत्र ते वासभूमिः
किं वा त्वन्नामधेयं विशदय भगवन्! त्वां प्रणम्याद्य याचे ॥ १०३

एवं संभावयन्तीं स्वभयदवदनालोकनादात्तकम्पां
वातोद्धूतां चलन्तीमिव वनजलतां तां प्रशान्तः कृतान्तः ।
प्रेक्ष्य प्रीतात्मचेताः प्रविमलचरितां प्रावृडम्भोदनाद-
प्राग्भारप्रौढनादः क्षितिपतितनयामाचचक्षे स्ववृत्तम् ॥ १०४

भद्रे! विद्धि यमोऽस्मि तावकमुखोद्गीतेषु देवेष्वहं
त्वद्भर्तारमितोऽपनेतुमनघे! क्षोणीं समायासिषम् ।
प्रत्यक्षत्वमुपागतोऽस्मि तव मामन्या न शक्तेक्षितुं
जीवन्ती विधिनिर्मितं तव विभोरायुस्समाप्तं ध्रुवम् ॥ १०५

यद्ब्रह्माऽऽयुर्व्यलिखदद्यो नास्य रूपानुरूपं
फाले साध्वि द्रुहिण इति तन्नाम सार्थं बभूव ।
किं दोषस्स्यात्कमलनयनानुज्ञया तिष्ठतो मे
कर्मण्यस्मिन्न मम विभुता कर्ममूलो हि लोकः ॥ १०६

इत्युक्त्वा स्वकरस्थितेन कटुना पाशेन तस्याङ्कात्
आत्मानं विनिकृष्य दक्षिणदिशं वेगाद्ययावन्तकः ।
अल्पायुस्त्वयमेष मेयमबला साध्वीवरा तन्मया
किं कर्तव्यमिहाब्जभूस्स विभुतां यातीति संचिन्तयन् ॥ १०७

सावित्री प्रियगात्रमाशु पिहितं कृत्वा निकुञ्जोदरे
संप्रार्थ्याखिलदेवतास्तदवने झञ्झामरुद्वेगिनम् ।
खिन्ना काममिभेन्द्रमन्दगमनाऽप्यात्मप्रियाकाङ्क्षया
वेगादन्तकमन्वगात्प्रतिपदं क्लिष्टाऽपि कष्टे पथि ॥ १०८

गत्वाऽतिदूरमध्वानं सावित्री भृशदुःखिता ।
सा जिजीवयिषुः कान्तमस्तावीत्समवर्तिनम् ॥ १०९

शमप्रधानं शमनं भवन्तं
शंसन्ति सन्तश्शतशो महान्तः ।
मनः कथं व्यापृतमन्यदुःख-
कारिण्यसत्कर्मणि ते महात्मन्! ॥ ११०

वदन्ति समवर्तिनं सुकृतदुष्कृतेष्वन्वहं
भवन्तमखिला जनास्त्वमसि धर्म देवोत्तमः ।

करोषि कथमीदृशं कथय गर्हितं कर्म तत्
वृथा न हि चिरार्जितं रचय सूर्यसूनो यशः ॥ १११

महादौर्भाग्यवशात्कथं तव मतिर्धर्मैकतानाऽप्यभूत्
मच्छ्रेयोविमुखी तथा यदि कुतस्ते धर्मराजाभिदा ।
दीना दूनमना विनाशमधुना याम्येव नाथं विना
याचेऽहं परमां कृपां तव तदद्यैनं समुज्जीवय ॥ ११२

इति ब्रुवन्तीं बहुधा नमन्तीं
मुहुः स्तुवन्तीं मुहुरुच्छ्वसन्तीम् ।
तां शोकभारात्कुटिलं चलन्तीं
कृपातिरेकादवदत्कृतान्तः ॥ ११३

साध्वि ! स्वप्नेन्द्रजालोपममिदमखिलं लोकतन्त्रं विचार्य
यद्भाव्यं तद्भवत्यन्वहमिह सुखदं दुःखदं वा जगत्याम् ।
लोकेऽस्मिन्मानवानामयमनघतमस्सत्यवान् पूर्वकर्म-
प्राचुर्यादन्तमाप स्वकृतपरिणतिं कोऽन्यथा कर्तुमीष्टे ॥ ११४

वरमश्वसुते ददाम्यहं ते
वृणु हित्वा दयितं वरत्रयं त्वम् ।
सरणिः कटुकण्टकावकीर्णा
न हि ते गम्यतमा प्रयाहि पश्चात् ॥ ११५

वदन्तमेनं वनजाप्तनन्दनं
भजन्तमागस्त्यदिशं तमन्तकम् ।

विमुच्य भीतिं विरचय्य साऽञ्जलिं
निवेदयामास विचिन्तितं स्वकम् ॥ ११६

यदि प्रसन्नश्शमनो मम स्वयं
ततः कृतार्थीकृतमानसाऽर्थये ।
स नेत्रहीनश्श्वशुरो ममानघः
तव प्रसादाद्भवतु श्रितेक्षणः ॥ ११७

तथैव भूयादिति तेन बोधिता
पुनस्तमाभाषत सा पतिव्रता ।
यतस्त्वया साप्तपदीनमापिता
ततोऽर्थये मच्छ्वशुरस्य राज्यकम् ॥ ११८

यमस्तदा तद्वचनं निशम्य
प्रहृष्टचेताः परमार्थयुक्तम् ।
भूयात्तथैवेति निगद्य पत्युः
प्राणान् विनाऽन्यद्वरयेत्युवाच ॥ ११९

नयेन लोकान् नयसे यम! त्वं
अद्रोहयुक्ता हि सतां प्रवृत्तिः ।
इत्यादिवाक्यैः परितोष्य साध्वी
पितुश्च तं पुत्रशतं ययाचे ॥ १२०

ततस्स सन्तुष्य तथेति शंसन्
शमप्रधानश्शमनश्शनैश्शनैः ।

पुनश्चचक्षे पतिजीवितं विना
वरं तुरीयं वरयेति साध्वीम् ॥ १.२१

ततः प्रहृष्टा क्षितिपालपुत्री
तमात्मनः पुत्त्रशतं ययाचे ।
यमोऽपि सन्तुष्टमनाः प्रकामं
स्मित्वा तथाऽस्त्वित्यवदत्सुशीलाम् ॥ १.२२

गद्यम्—ततः परमश्वविश्वंभरेश्वरतनयाऽपि सभक्तिप्रकर्षं शिरसि विनिहिताञ्जलिः सदैन्यमित्थमावेदयामास ॥ १.२३

गद्यम्—स्वामिन् भक्तवत्सल! युक्तमेव भवदुक्तमखिलं, अनुगृहीताऽस्मि वरप्रदानेन भवता दयासंगतव्रता, तथाऽपि विज्ञापनीयमिदमाकर्ण्यतां, प्रियतमप्राणोज्जीवनं विनाऽन्यदपरिमितानन्दभोगसाधनमपि फलहीनजीवनामिव लुब्धस्य महैश्वर्यमिव व्यर्थतामुपयाति, अनवरतपतिदेवतानां पतिरेव खलु सर्वस्वमिति विदितमेव भवता सकलधर्मवेदिना, तन्मम प्राणेश्वरमन्तरा किमन्यैः प्रार्थनान्तरैः, समित्समापादनार्थं मया सममरण्यानीमागतं मन्मनोरथावासमपगतासुमेकमस्मिन्नरण्ये परित्यज्य कथं जीवेयं, कथंवाऽन्यस्य मुखं दर्शयेयं, किं बन्धुभिः, किं धनेन, किंवा मया च जीवन्त्या, तदद्य यथा मदीयं जन्म सार्थकं भवेत्तथाऽनुग्राह्येयं त्वदीयपादारविन्दाश्रयिणी कृपापारावारेण भवता ॥ १२४

गद्यम्—अपरं च स्वामिन्नद्य भवतैव दयापरवशधिया प्रदत्तः किल मम सन्तानप्रदो वरः, तदद्य मत्प्रियतमोज्जीवनं विना नैव संगतं भवेत्, प्रियतमाभावे पतिव्रतानां कथमौरसाः पुत्रास्समुत्पद्येरन्, अतस्त्वयैव वरप्रदानेनानुगृहीतं मत्प्रियतमोज्जीवनमिति प्रमुदितधीरहमिदानीमभवं, तदद्य भवदीयस्तुरीयस्स वरो भवतैव सफलयितव्यः खलु ॥ १२५

नाथस्त्वं सर्वभूतानां रक्षणे हिंसनेऽपि वा ।
नाथं दत्त्वा विनाथां मां सनाथां रचय प्रभो ॥ १२६

गद्यम्—अथ तद्वदनवनजस्रवन्तीमसाधारणवचनामृतस्रवन्तीमसक्तन्निपीयात्मश्रवणचुळुकाभ्यां अगण्यकारुण्यरसतरङ्गितान्तरङ्गः प्रणततदङ्गनादैन्यभङ्गाभङ्गापाङ्गः पतङ्गाङ्गसंभवः सादरं तामित्थमवादीत् ॥ १२७

सुदति! भवदीयवचसां पद्धतिरश्मोपममपि हि जनस्य ।
द्रवयत्यधिकं हृदयं चन्द्रकला चन्द्रकान्तमिव ॥ १२८

अमृतमिति ये वदन्ति त्रिदशानामन्नमश्वराजसुते! ।
भवदीयवाक्सुधारसमाधुर्यं ते न जानन्ति ॥ १२९

नन्दयति मां त्वदीया वाग्रीतिर्भुवनभाविता साध्वि! ।
भीषयति चायमन्यासाधारणतां गतस्त्वदनुभावः ॥ १३०

पुरीं मदीयां मधुतुल्यवाक्ये
न मानुषी जीवयुता प्रवेष्टुम् ।

न चार्हति द्रष्टुमपि प्रयत्नात्
अतो निवर्तस्व निजं निवासम् ॥ १.३१

सेयं पुरी मे सकलापदां भूः
सर्वत्र मार्त्किकरसंवृता च ।
दुरन्तदुःखाकुलनारकीयैः
जनैः प्रकीर्णा तव भीतिदा स्यात् ॥ १.३२

भगवति! भर्तारं ते पाशान्मुक्तं करोम्यधुना ।
प्रमुदितहृदया भूत्वा प्रयाहि सखि! स्वमावासम् ॥ १३३

जीविष्यत्ययमक्षतकायश्शरदां चतुश्शतीमवनौ ।
रक्षिष्यति जगदखिलं यज्ञैरिष्ट्वा गमिष्यति ख्यातिम् ॥ १३४

कीर्त्या वासवमाभया हुतवहं धर्मेण मामोजसा
सारैर्नैऋतमात्मनीतिविभवेनाम्भःपतिं स्वाशुगैः ।
वायुं पूर्णधनेन किंनरपतिं सर्वज्ञभावेन तं
गौरीशं च विजित्य ते पतिरयं संपत्स्यते सन्नुतः ॥ १.३५

सत्यमहीपत्यवितं भवतु ससत्यं समस्तमपि राज्यम् ।
आकल्पमखिलजगतश्चाकल्पो भवतु ते चरितम् ॥ १.३६

पठति शृणोति च चरितं लिखति च जगतीह यस्तु भवदीयम् ।
अपदुरितोऽखिलविनुतस्स श्रीमान् भवतु ते प्रसादेन ॥ १.३७

गद्यम्---इत्याशीःपूर्वकं तां मस्तकतलविन्यस्तकोशीकृत-

हस्तामुपलाल्य, पश्यन्त्यास्तस्याः पुरस्तात्स्वयमन्तर्दधे भगवान्
वैकर्तनिश्शमनः ॥ १३८

मदचलितपुलिन्दे मञ्जुगुञ्जन्मिलिन्दे
मधुरतरमरन्दे मञ्जुलोर्वीजवृन्दे ।
निजसुचरितलब्धादन्तकानुग्रहात्सा
मदगजगमनाऽपि क्षिप्रमागान्निकुञ्जम् ॥ १३९

गद्यम्—एवमदूरत एव दूरतरमप्युपगम्यान्तकानुग्रहेण निकुञ्जं, तत्र च यथापूर्वमुत्सङ्गसङ्गतमारचय्योत्तमाङ्गमात्मवल्लभस्य क्षणमवतस्थे ॥ १४०

गद्यम्—तदनु धर्मराजानुग्रहेणोत्थाय सुप्तोत्थित इव ससंभूवल्लभः किञ्चिदवनतपूर्वकायोऽवष्टभ्य कन्धरामात्मवल्लभायाः चिन्तयन्नलमश्रुबिन्दुसन्दोहकन्दालितलोचनारविन्दः प्रियसुन्दरीति मन्दमुच्चार्य पुनरपि तदुत्सङ्ग एव निपपात ॥ १४१

स्वर्भानुमुक्तमिव मण्डलमैन्दवं सा
संवीक्ष्य भर्तृवदनाम्बुजमम्बुजाक्षी ।
पांसुप्रकीर्णमवमृज्य तदीयमङ्गं
नेत्रद्वयं च विदधे विविधोपचारान् ॥ १४२

सती सावित्रीत्थं श्रममुपगतं शोणनयनं
श्लथाङ्गं संताम्यत्करचरणमात्मैकशरणम् ।
विसंज्ञं विस्रम्भादलमुपचरन्ती स्वरमणं
क्षणं तस्थौ क्षोणीं गतमिव दिवस्स्वर्गिणमसौ ॥ १४३

गद्यम्—ततस्सोऽयं तदीयसानुनयोपचारात्किंचिद्विश्रान्तस्तामधिकृत्य प्रेयसीत्युच्चार्य निश्श्वस्य च दीर्घतरं तां निजगाद ॥ १४४

गद्यम्—अहो कियन्तं कालमधिगतनिद्रोऽस्मि, भद्रे! निद्रापरवशे मयि— १४५

भास्वद्दिव्यविभाविभासितमुखो धीरस्स्वतश्शैलवत्
गाम्भीर्याकलितोऽब्धिवन्नवघनश्यामस्सरोजाक्षवत् ।
कोटीराङ्गदतारहारकटकालंकारजालोज्ज्वलः
कश्चिन्मामतनोत्स्वपाणिविलसत्पाशावबद्धं पुमान् ॥ १४६

यदाऽहं तत्पार्श्वे दृढमुपनिबद्धस्समभवं
तदा प्रज्ञाहीनस्सपदि भवदङ्के निपतितः ।
ततः किं वा जातं तदिह न हि जाने किमु मति-
भ्रमो वा स्वप्नो वा विधिविलसितं वा प्रियतमे! ॥ १४७

गद्यम्—अथाश्वावनीन्द्रात्मजा तमज्ञातात्मजीवितान्तमतितान्तमात्मकान्तमवष्टभ्य अभिरामाभ्यां अभिभूताम्भोजनालाभ्यामात्मभुजाभ्यां, उपवीज्योपरि चेलाञ्चलेन सविनयं व्यजिज्ञपत् ॥ १४८

गद्यम्—देव! धैर्यमवलम्ब्यतां भवता नावलम्ब्यतां विलम्बश्च, क्रियतामाश्रमप्रयाणप्रयत्नः, नात्रेदानीं स्थातुमुचितं क्षणमपि, आसन्ना शर्वरी, प्रतिज्ञातं किल यदोटजाद्बहि-

गमनमध्यवसितं भगवता भवता तदा यावत्मायमागच्छामि भवदन्तिकामिति तातान्तिके, तद्वृथा कलयसि कथं, सोऽयमपि पिता ते संप्रस्रश्रान्ताश्रुमिश्रितनेत्रः कान्तया सह समापृच्छते कान्तारादागच्छतोऽध्वगान् 'आलोकितः किमस्मत्सुतः स्वकान्तासहितस्सत्याख्योऽस्मज्जीवितायितः' इति, भवान् येन तादृशीं दशामुपनीतः पुनरपि येनैवोज्जीवितश्च तमावेदयिष्याम्यहमन्तिके तयोरेव ताताम्बयोः, इदानीमसमयः, सरोजिनीमनोरञ्जनस्तावद्रविरस्तावनीधरशिखरविहारपर्युत्सुक इव वर्तते, प्राचीदिगङ्गनावदनचन्दनलालाटिकायमान इव परिपन्थी पङ्कजानां, परितः प्रतिपन्नाहारपूरितोदरास्सदारास्सत्वराः स्वकुलायाननुसरान्ति पत्ररथप्रकराः, तद्गच्छ गच्छावस्सहसा साल्वसर्वंसहामरेशसमीपमिति सादरं सप्रश्रयं चाभिधाय प्राणंसीत् ॥ १४९

निशम्य सत्यक्षितिभृद्वचोऽर्हं
तस्यास्ततस्तां दयितामवोचत् ।
यदात्मनोक्तं पितुरन्तिके तत्
स्मृत्वा भृशं शोकपरीतचेताः ॥ १५०

गद्यम्—अयि दयिते विपन्नावननिरते सतीनुतचरिते अश्वक्षितिपतिसुते! किं कथयाम्यद्य मन्दभाग्यः, त्वया सहाश्रम.दुर्व्यीमायाते मयि कः परोऽस्ति निकटे मत्तातस्य परि-

चर्यापरः, अनभिज्ञातास्मदागमनेन तातेन क्व भुक्तं क्व वा शयितं कुत्रवाऽध्युषितं, एवमपराधिना अधिगतपापेन मया कथं प्रवेष्टव्यमाश्रमपदं, अथवा कथं दर्शयितव्यमाननमनन्यसाधारणतेजोनिकायाय तस्मै, दातव्यं वा किमुत्तरं, किंवा करोमीदानीमिति ॥ १५१

गद्यम्—सावित्री चेत्थमालपन्तमनाधिगतकरणीयविचारमात्मभर्तारमधरीकृतामृतैरालापैरनुनयन्ती तमनुरञ्जयामास॥१५२

सावित्र्यास्सरासिजपत्रमित्रगात्र्याः
साल्वेशप्रियतनयस्स सामवाचा ।
निश्चित्य प्रकृतविचिन्तितं तदैच्छत्
संप्राप्तुं स्वपितृसदेशमाशुगत्या ॥ १५३

गच्छन्नथ स्वदयितासहितस्समागात्
सूर्यात्मजातटगतेन पथा वनान्तम् ।
मार्गे सुधोपमहयेशसुतामनोज्ञ-
संलापसंश्रवणसंहृतसर्वखेदः ॥ १५४

आगतो मधुरमानिनीमुख-
व्याहृतोक्तिभिरतीव तोषितः ।
विस्मितः पथि निरीक्ष्य विस्मयं
सस्मितोऽयमवदत्सहानुगाम् ॥ १५५

स्तबकयुगलमेतद्दर्शितं मन्दवातैः
स्थगयति लतिकेयं धूतपत्रच्छलेन ।
तदपि मधुकरस्तत्सान्निधत्ते जिघृक्षुः
स्वयमतिरमणीयं त्यज्यते किं रसज्ञैः ॥ १५६

गद्यम्—इत्थमारण्यरामणीयकमात्मनो दर्शयन्तमात्मकान्तमतीव त्रिरात्रोपवासपरिश्रान्ताऽपि नितान्तकृतान्तानुग्रहादपगतव्यथा सनाथतासंभूतसंपूर्णमनोरथा साऽश्वभूनाथसुता मस्तुतमाचचक्षे ॥ १५७

भगवन्! भवता दर्शितमटवीगतरामणीयकं त्वेतत् ।
द्रष्टव्यमादराच्छुस्संप्रति साल्वेन्द्र एव संसेव्यः ॥ १५८

क्रव्यादप्रकराश्चरन्ति परितः क्षुद्बाधितास्सांप्रतं
प्रत्याशं परमप्रमोदचलिता रात्रिंचरा भीकराः ।
स्नात्वा स्वाश्रममाश्रिताश्च यतिनां सङ्घाः खगास्संगताः
नीडान् धूमचयास्स्पृशन्ति हरितस्सायाह्नहोमोत्थिताः ॥ १५९

गच्छन्ति काननतलात्पथिकास्स्वधामा-
न्यावां तदन्तिकमितो द्रुतमद्य यावः ।
नो चेन्महाविपिनसीमानि मार्गदर्शी
कोऽस्त्यावयोरिह तदीश! भव प्रसन्नः ॥ १६०

त्वद्गात्रोल्लेहनेच्छुः करकलिततृणैर्नित्यसंवर्ध्यमाना
सारङ्गी सर्वदिक्षु प्रणिहितनयना त्वद्दिदृक्षाकुलाऽऽस्ते ।

अन्ये वन्या मृगास्त्वद्विरहभवशुचं प्राप्य नेच्छन्ति गन्तुं
कुत्राप्यत्तुं तृणानि त्वदुटजनिकटे संगतास्संचरन्ति ॥ १६१

पीत्वा तदीयवदनेन्दुविनिस्सृतं तत्
वाक्यामृतं श्रुतियुगेन स सत्यचन्द्रः ।
आगत्य शीघ्रमतिदूरमतिप्रमोदात्
जायायुतस्स्वपितुराश्रममाससाद ॥ १६२

हा पुत्र! हा रक्षक! हा प्रदीप!
वंशस्य हा प्राणसमानघ! त्वम् ।
प्रेयस्युपेतः क्व गतोऽसि तादृक्
प्रेमावयोः कुत्र गतं तवेति ॥ १६३

क्व गतस्तनयास्तपस्विनां म-
त्तनयो ज्ञातपरावरास्सखायः! ।
न हि चेद्ददतावयोस्सुतं तं
नियतं क्षिप्रमसूनिमांस्त्यजावः ॥ १६४

सत्येश सत्यव्रत सत्यचन्द्र
सत्यप्रतिष्ठापक सत्यकीर्ते! ।
संत्यज्य वृद्धावधुना क्व यातः
कुत्रासि कान्तासहितः पथीति ॥ १६५

गुरुवक्त्रविनिर्गतानि मातुः
वचसा संकलितानि सत्यचन्द्रः ।

श्रुतवान् श्रुतिशल्यतुल्यरूपा-
ण्यतिदीनानि वचांसि तत्र काले ॥ १६६

अश्रान्तमापदि रुदन्तमधः पतन्तं
अन्तर्व्यथापरिलुठन्तमसौ नितान्तम् ।
तान्तं कृतान्तवरलब्धदृगम्बुजातं
कान्तायुतः पितरमैक्षत तं महान्तम् ॥ १६७

दृष्ट्वा तं सत्यचन्द्रः परिणतवयसं भार्ययोपेतमार्यं
तत्रस्थानां मुनीनां मृदुतरवचनैः किंचिदुद्भूतधैर्यम् ।
साश्चर्यं स्वाक्षिलाभादपगतकम्पं संप्रमोदं व्यतानीत्
संपूर्णः पूर्णिमाभूर्भुवनमिव शशी दर्शनादेव सद्यः ॥ १६८

ततश्च—

अवन्दत सतीयुतस्स्वपितरौ निजाख्यां वदन्
तदन्तिकनिवासिनः परमयोगिनश्चानघान् ।
वनात्किमु सुखागमस्तव सुतेति हस्तेन तं
स्वमङ्कमधिरोपयन् स्वयमपृच्छदस्योद्यमम् ॥ १६९

कुत्र नीतस्त्वया कालः किं वृत्तं वनवर्त्मनि ।
इति पृष्टस्स्वपित्राऽसौ सावित्रीमिदमूचिवान् ॥ १७०

त्वया ज्ञातं सर्वं विपिनभुवि यद्वृत्तमिह तत्
समाचक्ष्व प्रीत्या सखि वनगतं वृत्तमखिलम् ।

मया ज्ञातं यावत्पथि सति ! समावेदितमभूत्
मदीयप्राणान् योऽहरदविदितस्तं च कथय ॥ १७१

गद्यम्—इत्थमाज्ञापिता अनवरतानन्तात्मश्रेयोदता सत्यवताऽऽत्मभर्त्रा अभिज्ञातवनान्तवृत्तान्ता अश्वविश्वंभराकान्तात्मजाता आत्मनः पितृगृहनिवासे माहानुभावेनाखिलभुवनवृत्तान्तवेदिना अमरपारिकाङ्क्षिप्रवरेण परिकथितं यत्सात्यवतमन्यूनाधिकमन्याज्ञातमतिविचित्रं वृत्तान्तं, अस्मिन् दिने महाविपिने स्वाक्षिसाक्षाद्भूतात्मविरचितस्तुतिशतप्रसन्नस्वान्तान्तकात्यन्तानुग्रहागतप्रियतमप्राणागमनप्रक्रमं, श्वशुरनयनागमनप्रवृत्तिं, आत्मनस्समवर्तिना सह संभाषणादिकं चाकथयत्॥१७२

पीत्वा स साल्वनृपतिस्सहवासतुष्टैः
सर्वैर्महामुनिभिरश्वसुतामुखेन्दोः ।
स्रस्तामनल्पतरवागमृतस्रवन्तीं
आत्मीयकर्णचुलकद्वयतस्तुतोष ॥ १७३

श्रुत्वाऽथ साल्वक्षितिभृन्महेन्द्र-
चन्द्रप्रियाऽप्यार्यगुणौघसान्द्रा ।
सहैव मौनिप्रियभामिनीभिः
तद्वाक्सुधाम्भोनिधिमज्जिताऽऽसीत् ॥ १७४

गद्यम्—साल्वावनीसंक्रन्दनोऽपि संक्रन्दनाद्यमरसुन्दरीसन्दोहाभिनन्द्यमानामन्दसद्गुणबृन्दमन्दिरीभूतां, अश्रुताना-

लोकितचरानुभावमहितां अखिललोकाद्भुतहेतुभूतचरितां आ-
त्मस्नुषां तामवलोक्य कंचित्कालममन्दानन्दामृततरङ्गिणीरम-
णोत्तरङ्गतरङ्गसङ्गतराङ्गितान्तरङ्ग इव स्थित्वा बहुमान्य च बहु-
वारमुपाघ्राय तदीयोत्तमाङ्गं, उन्नमय्य तन्मुखं, अहमद्याम्ब!
कृतार्थीकृतोऽस्मि भगवत्या भव्यतरवृत्त्या, भवत्योद्धारितम-
स्मत्कुलं, उद्धारिताश्चास्मत्पितरः, तावककीर्तिरखिलसतीशि-
रोजालकायिता, अस्मदन्ववायालयप्रतिष्ठामकृष्टस्तम्भभूताऽसी-
त्युपलाल्य, प्रस्थाप्य च सप्रश्रयमाश्रमवासिनः, सपत्नीकेन
सत्यवता सह स्वसहचर्या च सप्रमोदं तत्रैव कतिचिद्दिनानि
गमयामास ॥ १७५

काले याते कतिपयदिने कालधर्मं द्विषत्सु
प्राप्तेष्वस्य प्रबलतपसाऽराजकं वीक्ष्य राज्यम् ।
प्राप्यारण्यं प्रहतदुरितं प्रार्थयामासुरेनं
सर्वामात्यास्तदवितुमलं दुर्लभं किं सतां स्यात् ॥ १७६

सावित्री स्वपतियुता वने स्थिताऽसौ
चारैश्श्रीतुरगमहीवधूधवस्य ।
संजातं तनुजशतं विधेः प्रसादात्
इत्युक्ते प्रमदमगात्सहाखिलैस्स्वैः ॥ १७७

सावित्रीवरलाभलब्धमिदमित्यालोच्य साल्वाधिपः
सावित्रीसहितं तनूजममितक्षोणीतलाधीश्वरम् ।

कर्तुं चेतसि निश्चयं विरचयन् सद्योगिसंघोत्तमा-
शीर्वादमहतापदं शुचितमादागाद्बहिस्स्वाश्रमात् ॥ १७८

आगत्य तान् स्वसचिवान् परितो विनम्रान्
पादान्तिके विनयपूर्वमुवाच साल्वः ।
किं शत्रवो विलयमापुरनर्गला किं
पूर्मे किमद्य सुखिनस्सकलाश्च पौराः ॥ १७९

नष्टास्ते त्वत्तपसा राजन्! राज्यं त्वराजकं जातम् ।
चिरमव भूप! स्वमहीमिति जगदुर्मान्त्रिणः प्रमदात् ॥ १८०

श्वेतं छत्रं स्वीयमर्हं किरीटं
हस्तीन्द्रं चोद्रत्नसिंहासनं सः ।
तैरानीतं वीक्ष्य तानित्यवोचत्
मत्सूनोरस्यादाधिराज्येऽभिषेकः ॥ १८१

आकर्ण्याश्रमवासिनस्तदुदितं ते मन्त्रिणश्च स्वयं
सावित्रीसहितस्य सद्गुणजुषस्सद्योऽभिषेकं वने ।
श्रीमत्सत्यवतः सुरा इव शचीनाथस्य नाके पुरा
चक्रुर्मङ्गलवाद्यनादबहुलं साल्वावनीन्द्राज्ञया ॥ १८२

यथा शौरिश्श्रिया गौर्या शम्भुर्वाण्या चतुर्मुखः ।
तथाऽनपेतस्सावित्र्या बभौ श्रीसत्यवान् नृपः ॥ १८३

गद्यम्—इत्थमभिषिच्य निजमत्यधरीकृतामर्त्येन्द्रामा-
त्यास्त एते सपौरजानपदास्साल्वाधिपामात्याः तमगणमनीया-

द्वितीयंसद्गुणौघसान्द्रं अनिवार्यधैर्यतुलिताहार्येन्द्रं अनुपमानात्माननलावण्यानिर्जितचन्द्रं अनुत्तमात्मगुणानिर्जितमहेन्द्रं आश्रितावननिस्तन्द्रं सत्यचन्द्रं उपनीयाखिलश्रेयःपदं सकलसौख्यास्पदं साल्वजनपदं, तत्र चानन्यसुलभामेयविभानिकायात्मीयदिव्यालयवैचित्र्यनिर्जितनिर्जरनगरं मूलनगरमधिगतेन पौरवनिताप्रसारितलोचनोत्पलमालामालिनीकृतश्वेतातपत्रेण परिप्राप्तनिजपौर्विकप्रभुभुक्तचरशुभोदारराजमन्दिरेण सर्वसाम्राज्यलक्ष्मीसङ्गमसंभृतसर्वभद्रेण दूरविद्रावितामद्रेण निद्रापितक्षुद्रनृपोपद्रवेण विबुधहितकरामृतसमुद्रेण सत्यसंपत्सर्वस्वसारास्पदाङ्गुलीयकमुद्रेण सत्यमहीमहेन्द्रेण संरक्षिता यथापुरं सुखमासामासुः ॥ १८४

सावित्रीत्थं सवितृतनयात्प्राप्य तांस्तान् वरौघान्
अन्यालभ्यान् सकलजगतीविस्मयानन्दहेतून् ।
कीर्तिं लेभे सुतशतयुता कान्तया सत्यचन्द्रः
शच्येवेन्द्रास्त्रिदिवमवति स्माधिराज्यं धृतश्रीः ॥ १८५

यत्कारुण्यकटाक्षपातविधुताविद्यातमोग्रन्थयः
प्रख्याताः कवयो भवन्ति कविताचातुर्यधुर्याः परम् ।

तद्देवीकरुणाबलाद्विरचिते चम्पूप्रबन्धेऽनघे
सावित्रीचरितामृतैर्विलसिते तुर्यो विलासोऽगमत् ॥ १८६

इत्यखण्डपाण्डित्यसमुद्दण्डपण्डितप्रकाण्डपरिमाण्डितमाण्डिकल्
नगरमण्डनायमानेन, विश्वविख्यातविद्यावैदुष्यविभूषितस्य
विश्वविश्वंभराविश्रुतविनयविवेकादिगुणगणविराजितस्य
असमानयामुनाभिजनातिलकायमानस्य श्रीमतो
वेङ्कटरामार्यवर्यस्यान्तेवासिना, तदग्रजन्मनश्श्री-
वेङ्कटनृसिंहार्यस्यात्मजेन च वरदाचार्येण
विरचिते सावित्रीपरिणये
चतुर्थो विलासः



# अशुद्धशोधनम्.

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 4 | 7 | समसिजसुन्दरी | सरसिजभवसुन्दरी |
| 7 | 2 | नारीम्यो | नारीभ्यो |
| 13 | 14 | न्नन्यथा | न्नान्यथा |
| 13 | 17 | लाञ्चित | लाञ्छित |
| 16 | 16 | मातानोति | मातनोति |
| 24 | 5 | निवशे | निवेश |
| 25 | 12 | वारै | वरै |
| 40 | 2 | राजज्ञा | राजाज्ञा |
| 40 | 13 | हृद्दय | हृदय |
| 40 | 19 | मद्बुत | मद्भुत |
| 40 | 20 | समुदाय | समुदाया |
| 41 | 19 | करीम्भत | करम्भित |
| 43 | 10 | तजेसा | तेजसा |
| 44 | 1 | रमाऽथ मनो | रामाऽथ रमामनो |
| 44 | 9 | चचुक | चूचुक |
| 56 | 18 | ६६ | ६३ |
| 67 | 3 | आनलि | आनील |
| 67 | 6 | यज्ञोवीतं | यज्ञोपवीतं |
| 68 | 11 | तत्त्प | तत्त्व |
| 72 | 1 | अश्या | अश्वा |
| 86 | 7 | ताव्यतां | ताड्यतां |
| 114 | 3 | दोषकर | दोषाकर |
| 114 | 12 | समुपाध्राय | समुपाघ्राय |
| 118 | 3 | छछ्टा | छटा |
| 150 | 8 | साध्वि | साध्वि |